कविपति-विद्यापति-विरचितं

# भू-परिक्रमणम्

सम्पादक :

**आचार्य मुनीश्वर झा**, एम० ए०, बी० एल०, डि० लिट्, साहित्याचार्यः

प्राध्यापकोऽध्यक्षश्च, भाषाशास्त्रविभागः, कलिकाता राजकीय संस्कृतमहाविद्यालय ;

सदस्यः (शिक्षण-गवेषणा) स्नातकोत्तर-हिन्दी-विभागः,

कलिकाता विश्वविद्यालयः, कलिकाता



मिथिला सांस्कृतिक परिषद्

६ बी, कैलाश शाहा लेन, कलकत्ता-७

# निवेदनम्

ऋतुमुनिनिधीन्दुवत्सरे खिष्टीये वार्षिकोत्सवे पण्डितप्रवरैः आचार्य डा० मुनीश्वर झा महोदयैः सम्पादितं कविपति विद्यापतिविरचितं भूपरिक्रमण नामकं ग्रन्थं प्रकाशयति कलिकातास्थ मिथिला सांस्कृतिक परिषदिति महतो हर्षस्य विषयः। अत्र हि तथ्यावधारणपूर्वक समीचीन सम्पादननैपुण्यं विमलवैदुष्यञ्चा-वहताम् सम्पादक-महोदयानां मध्ययुगीनसंस्कृतिवाणीवैभव निदर्शनग्रन्थोऽयं साधारण पाठकानामन्वेषणपरायणानाञ्च परमोपकारी भविष्यतीति नास्ति संशीतिः।

वस्तुतः एतत्सदृशग्रन्थरत्नप्रकाशनेन मिथिला सांस्कृतिक परिषदः उत्तरोत्तरं श्रीवृद्धिर्भविष्यति। एतदर्थं परिषदियं डा० आचार्य मुनीश्वर झा महोदयेभ्यो धन्यवादान् वितरतीति शम्।

**कालीकान्त झा**, मन्त्री

**मिथिला सांस्कृतिक परिषत्,**

कलिकाता

# विषयानुक्रमणिका

# प्रसूनाञ्जलिः

वाराणसीमधिष्ठाय नानावर्षाणि सद्गुरोः ।
योऽधीत्य सर्वशास्त्राणि विदुषामग्रणीरभूत् ।।
काशीवासमहिम्ना सः काशीबाबेति संज्ञितः ।
पूर्वं राजकुमारेति नाम गौणमलब्ध च ।।
तस्येच्छया बाल्यकाले तत एवामरभारतीम् ।
विज्ञाय विविधा विद्याः परेभ्योऽधीतवानहम् ।।
दिवङ्गतस्य तस्यैव पितुश्चरणपङ्कजे ।
तीर्थे प्रतिपलं वन्द्ये कृतिरेषा समर्पिता ।।

# अभिनन्दन-सप्तपर्णी

विद्यापतिः कविवरो विद्यापतिरिव स्थितः ।
मिथिलायां पुरा जातः प्रसिद्धिं परमां गतः ॥१॥

ग्रन्थान्मञ्जुपदन्यासान्नैकान् स्वप्रतिभोत्थितान् ।
प्रणिनाय विदां वर्यो विद्वदुत्सवकारिणः ॥२॥

भूपरिक्रमणं नाम तेष्वेको मातृकागतः ।
मुनीश्वराख्यैर्विद्वद्भिः प्रकाश्यं नीयतेऽधुना ॥३॥

एतैः सूक्ष्मेक्षिकैरत्र पाठः संशोधितः शुभः ।
एतद्गतश्च विषयः स्वशब्दैरुपवर्णितः ॥४॥

अत्र भूयः परिश्रान्तं श्रीमुनीश्वरपण्डितैः ।
वैदुष्यस्य परं पारं गतैः शास्त्रविदां वरैः ॥५॥

कृतिरेषा समेषां नो मनोमोदकरी भृशम् ।
ज्ञानस्य वर्धनी चापि प्रचकास्ताच्चिरं भुवि ॥६॥

इत्येवं प्रार्थ्य भूतेशं कृपालुं भूतभावनम् ।
गिरः सत्यव्रतः शास्त्री विरामं तनुतेऽधुना ॥७॥

**डॉ सत्यव्रत शास्त्री,**
व्याकरणाचार्यः, एम०ए०, एम०ओ० एल०, पीएच०डी०
पण्डित मनमोहननाथ धर प्राध्यापकोऽध्यक्षश्च,
संस्कृत-विभागः, दिल्ली विश्वविद्यालयः, दिल्ली

पटनाविश्वविद्यालयस्य संस्कृतविभागाध्यक्षस्य प्राध्यापकस्य

डा० श्री बेचन झा शर्मणः

# सम्मतिः

डा० श्री मुनीश्वर झा शर्म्मणा सम्पादितं विद्यापतिविरचितं भूपरिक्रमणमवलोक्य नितरां प्रसीदामि। महाकविः विद्यापतिः न केवलं 'भाषाकविः' प्रसादगुणसमन्वितैः पद्यैः जनमनांसि रञ्जयति, अपि तु विविधविषयेषु द्वादश ग्रन्थान् निर्माय पण्डितमण्डलीः मण्डयति। भूपरिक्रमणम् इतिहास-भूगोलविवरणसमन्वितं तस्य ग्रन्थरत्नमद्य यावदप्रकाशितमासीत्। डा० झा महोदयः विदुषां धन्यवादार्हः यो हि महता परिश्रमेण भाषावैज्ञानिकदृष्ट्या ग्रन्थमिमं स्खलानि दूरीकृत्य प्रकाशितवान्।

विद्यापतिसाहित्यस्य विशेषज्ञः साहित्याचार्यो डा० श्री मुनीश्वर झा महोदयः कलिकाता संस्कृत महाविद्यालयस्य प्राध्यापक-विभागाध्यक्षपदमलङ्कुर्वाणः भाषा-साहित्यशास्त्रनिपुणो विद्यापतेरन्यानपि ग्रन्थान् आधुनिकसम्पादनरीत्या प्रकाशयिष्यतीति आशासे।

डा० श्री बेचन झा शर्मा

एम० ए०, डि० लिट्, साहित्याचार्यः

# उपक्रमणम्

गौतमयाज्ञवल्क्यकुमारिलमण्डनवाचस्पतिप्रभृतिसंस्कृतविदुषां प्रसविनीभूमिर्मिथिलेति बहोः कालात् प्रथितैव । तत्र हि ख्रिस्तीयचतुर्दशशताब्द्यां विद्यापतिः स्वजन्मना विद्यावगाहनविमलीकृतविसइबारमूलकवंशमलञ्चकारेति सम्यग् विज्ञातमस्ति ।

एवञ्च महाकविर्विद्यापतिः भारतीयकाव्यसाहित्यस्य चिरन्तनकविरस्ति । कविकोकिलोऽयं नव्यार्यभाषामैथिल्या जनको वर्त्तते । अस्य पदावलिकाव्यं भारतीयनव्यार्यभाषासु पीयूषवर्षणं मन्यते । कविवरेणेह गेयपदेषु भाषाभावयोर्मनोहारि सामञ्जस्यं विहितम् । वर्ण्यविषयस्य वक्रता, काव्यस्य रूपप्रधानता, सौन्दर्यस्य सरससंयोजनं, छन्दसां मधुरसुखदश्रुतिभङ्कृतिः, कवेर्व्यापकानुभूतिश्चेति यत् पञ्चामृतरूपायनं कविवरेणानेन कृतं, तन्नव्यभाषाकाव्ये दुर्लभमित्यत्र नास्ति केषामपि विप्रतिपत्तिः ।

यथा नूतनपदावलिसाहित्ये विद्यापतिः स्वकाव्यवैशिष्ट्येन कविशेखरोऽभूत्, तथैव संस्कृत-साहित्ये स पण्डितकविरासीत् । तेन कविवरेण संस्कृतरचनाभिः देववाण्याः यन्महत्त्वं गौरवं वा प्रकटीकृतं तन्नूनं श्लाघ्यं हृदयावर्जकञ्चास्ति ।

महाकविर्विद्यापतिः संस्कृते विविधविषयान् पाण्डित्यपरिचायकान् अनेकान् ग्रन्थान् व्यरचयत् । तेषु भूपरिक्रमणम्, पुरुषपरीक्षा, लिखनावली, विभागसार, गङ्गावाक्यावली, दानवाक्यावली, शैवसर्वस्वसारः, शैवसर्वस्वप्रमाणभूतसंग्रहः, व्याडिभक्तितरङ्गिणी, वर्षकृत्यम्, गयापत्तलकम्, दुर्गाभक्तितरङ्गिणी चेति द्वादश ग्रन्थाः साम्प्रतं समुपलभ्यन्ते । विद्यापतेः अन्याः काश्चन रचनाः शोधार्थिणां कृते प्राप्तप्रकाशाः भविष्यन्तीत्याशासे । एतस्यां विपुलग्रन्थतालिकायां वर्ण्यविषयवैविध्यं विषयप्रतिपादनचातुर्यं चावलोक्य परमाश्चर्यमादधते विद्वज्जनाः । कथा-नीति-पुराण-लोकरीति-सदाचार-पूजनप्रभृतिविविधविषयेषु ग्रन्थेषु विद्यापतेर्विशिष्टप्रतिभायाः बहुश्रुतेश्च परिचयः सम्यग् भवति ।

भूपरिक्रमणं विद्यापतेर्भौगोलिकं संस्मरणम् । रचनेयं प्रतिभाशालिनोऽस्य कवेः प्रथमे वयसि प्रथमा कृतिः । मालायां प्रथमपुष्पस्य, नभसि प्रथमनक्षत्रस्य च यत्स्थानं तदेव कवेरस्य संस्कृत-ग्रन्थमालायां भूपरिक्रमणस्य प्रथमस्थानं वरीवर्त्ति । ग्रन्थेऽस्मिन् यद्वाग्वैभवं दृश्यते तस्य क्रमिकप्रतिफलनं ग्रन्थकारस्य परवर्त्तिग्रन्थेषु

इतः पूर्वं रचनेयममुद्रिताऽऽसीत् । अस्याः एकैव लिपिः सम्प्रति कलिकाता-राजकीय-संस्कृतमहाविद्यालयस्य पुस्तकालये हस्तलेखविभागे सुरक्षिता समुपलभ्यते । राजेन्द्रलालमित्रसम्पादिते हस्तलेखसूचीग्रन्थे उल्लिखितमस्ति (सूचीग्रन्थ ६ नं० ७६) यदस्या एका लिपिः बंगालएशियाटिकसोसाइट्यां हस्तलेखागारे सुरक्षिते ति। किन्तु साम्प्रतमियमनुपलब्धा वर्त्तते । रचनायाः एका छायालिपिः बिहारराष्ट्र-भाषापरिषदः विद्यापति-विभागे प्राप्यते । सा तु कलिकाता संस्कृतमहाविद्यालये सुरक्षितस्य हस्तलेखस्यैव प्रतिलिपिः । एवञ्च सुरक्षितोऽयं हस्तलेख एवात्र आधारत्वेन गृहीतोऽस्ति ।

प्रस्तुते हस्तलेखे पञ्चाशत् पत्राणि वर्त्तन्ते यत्रान्तिमं पृष्ठं लेखशून्यमस्ति । एवमत्र ९९ पृष्ठानि सन्ति । "मुनिरामबाणशशिवत्सरे संख्यके एतासां परीक्षणवृत्ति चक्रे भूपस्य चाज्ञया"[1] इति वाक्येनोल्लिखिता (१५३७) वर्षतिथिर्निर्दिष्टाऽस्य हस्तलेखस्य भवति । शकाब्दनिर्देशाभ्युपगमे सति लेखस्य समयः ख्रि.तीया षोडश-शताब्दी सम्भवति । किन्तु लिपिकरणमेतावत् प्राचीनं न प्रतीयते । अतएव प्रस्तुत हस्तलेखो मूललेखस्य प्रतिलिपिरेव—नास्त्यत्राशङ्कालेशोऽपि । एवञ्च निर्दिष्टतिथिः प्रतिलिपिरूपहस्तलेखस्यैवेति मम मतिः । अप्राचीनोऽप्ययं हस्तलेखो जीर्णतामुपागमत् । क्वचिन्मसीलोपात् क्वचिन्मसीलेपाच्च अनेकेषु पत्रेषु वाक्यान्यपाठ्यतां गतानि सन्ति । हस्तलेखभाषायाञ्च लिपिकरप्रमादवशात् यत्र तत्र व्याकरणाशुद्धयः प्राप्यन्ते । वर्गनासिक्यस्थानेऽनुस्वारः, बवयोः सशयोर्जययोश्चापार्थक्यं, मात्राणां ह्रस्वदीर्घविपर्यश्च नव्यप्राच्यार्यभाषाणामेव प्रभावः परिलक्ष्यते ।

इदं तु प्रमाणप्रमितं यद्रचनाया नाम भूपरिक्रमणं न तु भूपरिक्रमा, यथा चेदं म० म० हरप्रसादशास्त्रि, डा० विमानबिहारि मजुमदार, डा० उमेश मिश्र, डा० सुभद्र झा, डा० शिवप्रसाद सिंह प्रभृतिभिर्विद्यापतिसाहित्यानुरागिभिः विद्वद्भि-रुल्लिखितमस्ति । भूपरिक्रमेति प्रयोगो व्याकरणशास्त्रदृष्ट्याऽपशब्द एव भवति । तथा चास्माकं ग्रन्थकारो विद्यापतिः स्वयमेव ग्रन्थस्य प्रस्तावनायां देशकथाविवरणा तेषु च बहुशः सुस्पष्टं तथाविधनामोल्लेखं कृतवान् । एतद्विषये विद्यापतेरेव वाक्यानि प्रामाण्यं वितन्वन्ति—

नत्वा गणपतिं साम्बं श्रीविष्णुं रविमम्बिकाम् ।
भूपरिक्रमणग्रन्थो लिख्यते भुवि नैमिषे ।[2]

---

१. हस्तलेखे पत्रसंख्या ५०

२. हस्तलेखे, प० १

........इति विद्यापतिकविविरचिते भूपरिक्रमणे ब्रह्मावर्त्ते दयावीरकथा समाप्ता ।[१]

........इति विद्यापतिकविविरचिते भूपरिक्रमणे महाप्रयागविवरणे युद्धवीरकथा सम्‍ा ।

........इति विद्यापतिकविविरचिते भूपरिक्रमणे काशीतीर्थोभयकथाविवृत्तिः समाप्ता ।[३]

........इति भूपरिक्रमणे बलदेवतीर्थयात्रायां सिद्धदेशबलिदेशविवरणं सम्पूर्णम् ।[४]

........इति भूपरिक्रमणग्रन्थे नृसिंहतीर्थविवरणे कृपणकथा समाप्ता ।[५]

........इति विद्यापतिकृते भूपरिक्रमणग्रन्थे जनकदेशविवृत्यामलसकथा समाप्ता ।[६]

रचनेयं कविवरेण नैमिषारण्यवासिनो देवसिंहस्य निदेशाल्लिखिता । ग्रन्थ-रचनायास्य महती योजनाऽऽसीत् ।

पञ्चषष्ठिदेशयुतां पञ्चषष्ठिकथान्विताम् ।
चतुष्खण्डसमायुक्तामाह विद्यापतिः कविः ॥[७]

परमत्र सप्तानामेव देशानां विवरणं लभ्यते । देशैकविवरणे एकैव कथा निबन्धीकृता वर्त्तते, केवलं काशीक्षेत्रविवरणे कथाद्वयं निबद्धमस्ति । एवञ्च ग्रंथेऽस्मिन् अष्टानां कथानां सन्निवेशो दृश्यते । ता एव कथाः कविना पुरुषपरीक्षानामके परवर्त्तिग्रन्थे उपस्थापिताः ।

इदं तथ्यं यत्संस्कृतसाहित्ये इतिहासपुराणादिविषयकाः अपरिमिता ग्रन्थाः सन्ति । तत्र च पुराणमहाकाव्येषु भूविवरणस्य परम्पराप्यविच्छिन्नाऽस्ति । किन्तु प्रस्तुतस्य ग्रन्थस्य भूविवरणपद्धतिर्निर्भ्रान्तरूपेणाऽभिनवेति निश्चप्रचम् ।

प्रस्तावनाक्रमेण कथितमस्ति यत्कृष्णाग्रजो बलदेवोऽग्निपुराणवक्तारं वह्निसमुद्भवं सूतं हतवान् । ब्राह्मणवधापराद्धो हि बलदेवो मुनिवाक्यात् पापशान्त्यर्थं भूपरि-

१. हस्तलेखे, प० १६
२. तत्रैव, प० २५
३. तत्रैव, प० ३७
४. तत्रैव, प० ४३
५. तत्रैव, प० ४४
६. तत्रैव, प० ५०
७. तत्रैव, प० १

क्रमणमारब्धवान् । तत्प्रसङ्गे मालवदेशवासिनः काष्ठग्रामनिवासिनो धौम्यनाम्न कस्यचिन्मुनेर्दर्शनं तस्य तत्र द्रुपददेशे जातम् । त्रिकालज्ञधौम्यमुनिपुरष्कृतो हि बलदेव. यात्रामारेभे । रात्रौ धौम्यो महामुनि श्रमनिवारणे तं कथामुवाच । तदुक्त मुनिना—

नयानुरोधेन गुणेन वाचां कथारसस्याऽपि कुतूहलेन ।
बुधोऽपि वैदग्ध्यविशुद्धचेताः प्रपञ्चमाकर्णयिता न किं मे ॥[1]

एवञ्च, वैदग्ध्यविशुद्धचेता बुधोऽपि अस्य प्रबन्धस्याकर्णयिता भविष्यत्येव ।

ततो नैमिषं त्यक्त्वा द्रुपददेशस्य राजधानी पृथुका जगाम । सा त्रिशतग्रामसयुताऽऽसीत् । तत्र त्रिदिवस स्थित्वा स शातनीपुरे जगाम । शातनीपुरात् वेणुपुर गतवान् । तत्रैव रात्रौ द्रौपदीहरणस्थाने मुनि. कथाप्रस्तावरूपेण कामपालस्यज्ञानविवृद्धये पुरुषपरीक्षारूपा कथा प्रोवाच ।

पुरुषाः परिचीयन्ते पुरुषस्य परीक्षया ।
तत्पुरुषपरीक्षेयं कथा सर्वमनःप्रिया ॥[2]

पुरुषलक्षणञ्चोक्तम्—

वीरः सुधीः सविद्यश्च पुरुषः पुरुषार्थवान् ।
तदन्ये पुरुषाकाराः पशवः पुच्छवर्जिताः ॥[3]

पुरुषश्च चतुर्विधः कथित—दानवीरो दयावीरो युद्धवीरः सत्यवीरश्च । कथाच्छलेन प्रथमं दानवीरविक्रमादित्यस्य कथा प्रस्तुता ।

अथ च हारभूमि परित्यज्य बलदेव सप्तयोजनव्यत्यये ब्रह्मावर्त्तं गतवान् । तत. विस्तीर्णपुरी जगाम । तत्रैव कल्याणीनदीसन्निधौ पञ्चदिनं यावत् स तीर्थयात्रा चकार । नालिकानदीतीरे कालेश्वरं सम्पूज्य स वाल्मीक्याश्रमं जगाम । तत्रैव पिलूकानने सीताप्रसवस्थानञ्चासीत् यल्लोके 'सौरि' इति प्रख्यातमस्ति । तत्तीर्थभूमि गत्वा कुशलवयोधनस्थानं दृष्ट्वा च हली हर्षमुपागतः । तत्क्षेत्रे महापातकनाशिनी पञ्चक्रोशान्विता भूमि. । तत्रैव कल्याणीतटिनीतटे कुलपिपुरमासीत् यत्र सहस्रशो राजपुत्रा. आसन् । कर्णपुरं कल्याणपुरं चतुर्वेदपुरं खर्जरीपुरं लोलपुरञ्चेति पञ्च-

१. हस्तलेखे, प० २
२. तत्रैव, प० २
३. तत्रैव, प० ३,४

पुरस्कृतो देशो 'लघुब्रह्मावर्त्त' स्तत्रैवासीत् । अथान्त्ये रात्रिभागे सौरिस्थाने महामुनी राया दयावीरकथा कथितवान् ।

ब्रह्मावर्त्तं विहाय त्रिकालज्ञेन मुनिना सम बलदेवो यज्ञभूमिकं जगाम । प्रथम कर्णपुर, तत हस्तिकर्णपुर, तदनन्तर व्रिजभूमि विहाय स प्रयागं प्राप्तवान् । प्रयाग-विवरणं कविवरेण विद्यापतिना ।

तीर्थराजमहाक्षेत्रं नदीत्रयसमन्वितम् ।
सितासितारुणा राजन् वेणीरूपेण संस्थिता ॥
आबालचन्द्रादारभ्य प्रतिष्ठानपुरावधि ।
नीलकण्ठपुरं यावत् पञ्चयोजनसम्मितम् ॥
तन्मध्ये पञ्चक्रोशश्च कामनासिद्धिः कलौ ।
सोमेश्वरं दशाश्वमेध च शूलेशं च महीपते ॥[1]

इत्यादिपद्यै. कृतमस्ति ॥

सर्वत्र बलदेवो नियमतः यात्रा चकार । त्रिकालज्ञेन सहाश्रितो बलदेव प्रयागे चतुर्दिनमुवास । तत्र भारद्वाजाश्रमे स सहस्रब्राह्मणाना भोजयांचकार । महाप्रयाग प्रदक्षिणं कृत्वा स प्रयागस्योत्तरभागे योजनैकव्यतिक्रमे मलकाख्यग्रामं दृष्टवान् । ततो मधुग्रामे कामपालो भूरि मधु पीतवान् । मधुग्रामस्य निकटे 'गङ्गा वेगतो वहति । मधुग्रामस्य सन्निधावेव फतेपुरग्राम आसीत् । फतेपुरं प्राप्य बल-देवश्च द्रपुरं जगाम । च द्रपुरस्य निकटे मयदैत्येन निर्मितो मायग्राम आसीत् । तन्निकटे चकोरनयनीग्रामः, यत्र चकोरचकोरीमिथुनोपाख्यानं प्राचरत् । तत्रैव अरैलग्राम सेराजग्रामोऽपि यत्र मृण्मयं दुर्गमासीत् । पुनश्च महाप्रयागं प्रदक्षिणी-कृत्य बली भारद्वाजाश्रमं गतः । तत्रैव रात्रौ धौम्यो महामुनिः शुभां 'युद्धवीरकथां' बलदेवाय प्रोवाच ।

युद्धवीरकथां श्रुत्वा बलदेवः प्रयागक्षेत्रं विहाय काशी गन्तुमुपचक्रमे । तत स गङ्गामुत्तीर्य प्रतिष्ठानपुरं जगाम । तदनन्तरं 'चन्द्रवंशराजधानी त्यक्त्वा स' नाक-देशं गतवान् । कामचक्रस्य पश्चिमे सुकर्मभूमिकां त्यक्त्वा पञ्चयोजनसम्मितां कैवल्यपृथिवी प्राप्तो हली । तत्र काशीक्षेत्रे पञ्चक्रोशान्विता मही वर्त्तते । तत्र—

वरणासिसरितोर्मध्ये क्रोशत्रयमिता मही ।
वाराणसीति विख्याता प्राणिनां सायुज्यकारिणी ॥[2]

---

१. हस्तलेखे, प० १७ ।
२. तत्रैव, प० २५ ।

त्रिकालज्ञेन मुनिना सहितो बलदेवस्तत्र द्वादशरात्रमुवास। पञ्चक्रोशस्य परिक्रमं कृत्वा कामपालः प्रथमं कर्दमेश्वरं जगाम। अथान्तरे हल्लिपालदेशमध्ये जतुभूमिकं देशं हली गतवान्। ततः रामेश्वरं कुसुमपुरं गत्वा बलदेवः करेठग्रामं प्राप्तवान्। पुनः स कपिलतीर्थे समागतः। तत्र दक्षदेशतः अष्टग्रामाद् गण्डाह्वग्रामाद् भद्रग्रामाच्चागता भूपतयो बलदेवं पूजयामासुः। ततः सर्वान् भूपालान् विसृज्य नानाधनञ्च परिगृह्य बलदेवो वरणायास्तटे लिङ्गं स्थापयामास। तत्रैव आदिकेशवसन्निधाने निशाभागे महामुनिः सत्यवीरस्य कथां, पश्चादक्रूरकथाप्रसङ्गे चौरादीनां कथाञ्चाश्रावयत्।

अथान्तरे प्रभाते च काशीं विहाय बलदेवः स्वर्गभूमिं गतवान्। जैनदेवस्य सन्निधौ सारनाथश्च तत्रैव वर्त्तते। स्वर्गभूमिं परित्यज्य गोमती नदी सन्तीर्य्य त्रिदलकाननं संस्पृश्य गाधिदेशं त्यक्त्वा च बलदेवो वामनाश्रमं च्यवनाश्रमञ्च क्रमशः प्राप्तवान्। च्यवनमुनिं प्रणम्य स निर्जरौषधिमापिबत्। ततः कारुषं दक्षिणे कृत्वा कर्म्मनाशां विहाय च ताडकाविपिनान्ते रामरेखां ददर्श। ततः स पञ्चक्रोशयोगिनां सिद्धिदायकं सिद्धाश्रमं प्राप्तवान्। भोजराजवंशजैः भूपैः शासितः सप्तयोजनपरिमितो देशः सदा कर्कश इति विश्रूयते स्म। तत्रैव सोमलालीमहाग्रामः हट्टपुरग्रामश्च। सिद्धदेशेषु त्रीणि शतानि ग्राममुख्याश्च विश्रुताः। तत्रैव रामभक्ताः वसन्ति। कामपालो विश्वामित्रस्थलं गतवान्। तत्र मुनिमुखाद् विश्वामित्रवृत्तान्तमवगम्य बलदेवो गङ्गाया उत्तरे तीरे दर्दुरक्षेत्रं जगाम। तत्र सरयूसङ्गमान्तिके वलिग्रामञ्च स प्राप्तवान्। तत्रैव सर्वलोकविमुक्तिदं भार्गवमुनेः सुस्थानमासीत्। वालियान्तरे लोहडिग्रामो विश्रुतः। ततः ताजपुराख्यमहाग्राम आसीत्। तस्मिन् क्षेत्रे त्रिविक्रममूर्त्तेस्त्रिविक्रमस्थलमासीत्। सरयूगङ्गयोः सङ्गे दानकग्रामः पुरास्थित आसीत्, यत्र शुक्राचार्यमुनिः कुशैः काणत्वमगात्। तत्र बलदेवो दिवसत्रयमुवास। मुनिश्च तत्रैव भीरुकथां कथयामास।

ततः कामपालः पञ्चयोजनव्यत्यये नृसिंहतीर्थदेशं प्राप्तवान्। भोजराजस्य पत्तनं भोजराजपत्तनं पालितपत्तनं चेति द्वे पत्तने विहाय बलदेवो मणिहारिसन्निधाने नृसिंहतीर्थं जगाम। तत्रैव पुरा पाद्मकल्पे नृसिंहदेवः प्रादुर्भावमाप्तवान्। नृसिंहनखारभूमिश्च त्रयोदशयोजनान्विताऽऽसीत्। तत्र रम्यं विश्वम्भरपुरं चाराणपत्तनञ्च। तत्रैव कुडमिजातिसुखास्पदं जगदीशपुरमासीत्। निकटे हि भालुकाघट्ट यत्र सदा महत् दस्युभयं तिष्ठति स्म। बलदेवः पञ्चरात्रं तत्रोवास। तत्रैव तं प्रति त्रिकालज्ञो मुनिः कृपणकथां प्रोवाच।

तदनन्तरं बलदेवो नरहरिदेशकं परित्यज्य पाटलिसंज्ञकं देशं गतवान्। तत्र (पाटलि) देवीं पूजयित्वा स नगरशोभनं दृष्टवान्। ततः गङ्गामुत्तीर्य्य गङ्गागण्डकी-

सङ्गमं गतवान् । सङ्गमे स्नात्वा पितॄंश्च तर्पयित्वा तीरभुक्तिं जगाम । तीरभुक्तिञ्च विहाय स जनकदेशं प्राप्तवान् । जनकपुरे दक्षिणांशे सप्तक्रोशव्यतिक्रमे डिजगल-महाग्रामे जनकस्य गृहा आसन् । तन्निकटे सरितां श्रेष्ठा यमुना प्रवहति स्म । डिजगल-लस्य दक्षिणे भागे योजनार्द्धव्यतिक्रमे गिरिजासंज्ञको ग्रामः यत्र पुष्करिणीद्वयान्तरे प्राचीनं मन्दिरमासीत् । तत्रैव भैरवस्थानमासीत् । भैरवं पूजयित्वा बलदेवः सीता-मण्डपभूमिकां गतवान् । सीताकुण्डस्य दक्षिणांशे क्रोशत्रयव्यतिक्रमे सूरस्थानमासीत् । तन्निकटे धनुषग्रामः यश्चाभीराणां निवासभूः । गिरिजादक्षिणभागे पञ्चक्रोशव्यति-क्रमे आहीरीग्रामसंज्ञको महाग्राम आसीत् । नातिदूरे नदीषु ह्रस्वा कमला नदी वेगतो वहति स्म । आहीरीपत्तनस्य दक्षिणे पञ्चक्रोशव्यतिक्रमे विशौरी नामको ग्रामः स्थितः । ततः पञ्चक्रोशव्यत्यये अरगाजापुकुण्डं, दशरथकुण्डं सा(ह)गर-कुण्डञ्चाऽऽसन् । गङ्गासागरकुण्डे जलेश्वरो महादेवो निवसति स्म । तत्रैव गौतम-कुण्डे रात्रौ त्रिकालज्ञो धौम्यो मुनिरलसकथां बलदेवाय श्रावयामास । एवं प्रकारेण जनकदेशविवरणेन ग्रन्थान्तो भवति ।

उल्लिखितेन सन्दर्भेण स्पष्टमेतत् यदस्य ग्रन्थरत्नस्य शैली पञ्चतन्त्रचम्पूग्रन्थस्य सदृशी विद्यते । एवं तु भारतीयसाहित्ये एतादृश्याः शैल्याः विकासः महाभारत-पुराणेषु जातककथादिषु च प्राप्यते । अत्र जीवनयात्रायाः विविधमार्गेषु कथं प्रवर्त्ति-तव्यमिति कथाच्छलेन वर्णितमस्ति । कथासु मनोरञ्जनं स्वाभाविकम् । एवञ्च "व्यवहारविदे कान्तासम्मिततयोपदेशयुजे" मनःप्रसादनशैल्या लोकनीतिशास्त्रस्य सुखप्रदसंयोजनं भवति ।

अधीते य इदं नित्यं नीतिशास्त्रं शृणोति च ।
न पराभवमाप्नोति शक्रादपि कदाचन ॥

इति यथोक्तं पञ्चतन्त्रलेखकेन विष्णुशर्मणा, एवमेवास्माकं महाकविर्विद्यापति-स्तादृशीं कथाश्रियं समर्थयंल्लिखितवान्—

नयानुरोधेन गुणेन वाचां
कथारसस्यापि कुतूहलेन ।
बुधोऽपि वैदग्ध्यविशुद्धचेताः
प्रपञ्चमाकर्णयिता न किं मे ॥

परमत्र कथाशैल्यां वर्ण्यविषये नवीनतायाः तत्प्रतिपादने चातुर्यस्य च दर्शनं भवति । यतो हि पञ्चतन्त्रस्य पशुपक्षिकथाः ग्रन्थेऽस्मिन् न प्राप्यन्ते । पुराणे-तिहासयोर्मानवीयाःकथा एवात्र सन्तिष्ठन्ते । कलौ शिक्षाहेतुर्न खलु कृतजात -

चरितमिति विवेकाद्देशकालानुसारिपुरुषचारित्र्यसंयुताः कथाः समुपलभ्यन्ते । भूपरिक्रमणग्रन्थस्य कथासु दानवीरादित्यप्रतापो विक्रमादित्यः, विवेकशून्यो यवनराज अलावदीनः, कर्णाटकुलसम्भवः पराक्रमरसिको मल्लदेवो नाम मिथिलाराजपुत्रः, कान्यकुब्जेश्वरः सुभटो विवेकयुक्तो जयचन्द्रः, कर्णाटकुलावतंसो नरसिंहो नामा चौहानकुलसंभवश्चाचिको नामा च राजकुमाराविति प्रभृतयः इतिहासप्रसिद्धाः अर्धेतिहासख्याताः नायकाः सन्ति । एवञ्च भूपरिक्रमणे भूगोलेतिहासयोः सम्यग् मिश्रणं कृतमस्ति ।

भूपरिक्रमणे कवेः कलावैशिष्ट्यं सर्वत्रैव दृष्टिपथमायाति । विषयवर्णनं हि रुचिरं चित्तावर्जकं,काव्यानुरूपं लोकरीत्यनुगं च पुरः उपतिष्ठते । स्वयं कविनोक्तम्—

तत्र रीत्या हि लोकस्य काव्यरीत्या च भूमिप ।
लक्षीकृत्य पद्यवाक्यं तेने विद्यापतिः कविः ॥[१]

भाषा विषयानुकूला । गद्ये पद्ये चाद्भुतप्रवाहो विद्यते । शुष्कं गम्भीरं ज्ञानमपि कथारूपेण काव्यरीत्या च प्रस्तुतं सत् सरलं सुबोधमाकर्षकञ्च सम्पद्यमानमस्ति । कथाविधिः सर्वत्रैव अभिरुचिं कौतुकञ्चोद्बोधयति । संक्षेपतो भूपरिक्रमणस्य संस्कृतभाषा पुराणपञ्चतन्त्रभाषेव सहजाऽतिसरला च भवति । इयं हि जनसामान्यबोधगम्येति ।

भूपरिक्रमणे देशविवरणमतिस्पष्टं सजीवञ्चास्ति । विभिन्नदेशजनपदनगर पत्तनग्राममहाग्रामाणां परिचयः अत्र संक्षेपतः स्वभावतश्च प्रस्तूयते । वस्तुतः ग्रन्थस्य स्थलवर्णनं वर्त्तमानगजेटियराख्यविवरणेन साम्यं भजते । स्फुरच्चलच्चित्रमिव ग्रन्थेऽस्मिन् विवरणं वाचकानां श्रोतॄणाञ्च मनांसि आवर्जयति ।

संक्षेपतो भूपरिक्रमणमेको विशिष्टो ग्रन्थः । अस्य ग्रन्थरत्नस्य परिशीलनेन विद्यापतिवाङ्मयशोधार्थिणां पुरतो नवानि नवानि तथ्यानि दृश्यमानानि भविष्यन्तीति निष्प्रपञ्चम् ।

अतो भूपरिक्रमणग्रन्थस्य मुद्रणं परमावश्यकम् । किन्तु स्वीकार्य्यमिदं यदस्य प्रकाशनकार्य्यं न सरलमासीत् । यथा चादौ कथितम्-प्रस्तुते हस्तलेखे यत्रतत्राशुद्धयः प्राप्यन्ते । तथाविधानामशुद्धीनां मूलकारणं लिपिकारस्य प्रमादः अज्ञानञ्चासीत् । यतो हि बहुश्रुतस्य विद्यापतेः तादृश्यः अशुद्धयो न सम्भाव्याः इति । यतोऽस्य ग्रन्थस्य एक एव हस्तलेखः प्राप्तो वर्त्तते, मूलपाठस्य निर्धारणं कठिनमजनि ।

---

१. हस्तलेखे, पत्रसंख्या ३६ ।

पाठोद्धारे वस्तुनः सम्यग्ज्ञानं, तत्कालनिबद्धभाषाप्रयोगे अभिनिवेशः, प्रतिपाद्य-विषयस्य तथ्यानुशीलनं, ग्रन्थकारस्य परवर्त्तिरचनानां भाषारीतिः, विशेषतः पुरुष-परीक्षायां प्राप्तानां समरूपवाक्यानां तुलनात्मकं पाठनिरीक्षणञ्च मार्गनिदर्शनमभूत् ।

एवं हि हस्तलेखस्य ४४तमे पत्रे जनकदेशस्य वर्णनमस्ति । तत्र 'पमुना सरितां सदा वहति वेगगा' इति पाठः प्राप्यते । अत्र हि विशेष्यविशेषणसङ्गत्या सरितामित्यस्य पदस्यान्त्यानुस्वारो व्याकरणप्रतिकूलो वर्त्तते । छन्दसोऽनुरोधेन 'तत्र' इत्यस्यान्तर्निवेशेन सरितेति पाठः सङ्गतो भवति । तथा च पाठरक्षणार्थं तथ्यावधानार्थञ्च 'श्रेष्ठा' पदस्यान्तर्निवेशो विहितो मया । पुनश्च निर्दिष्टे देशे पमुना नाम्नी काऽपि नदी नोपलभ्यते । जनकपुरस्य सन्निधौ 'जमुनी' नदी अद्यापि वर्त्तते । स्पष्टतो विद्यापतिकाले एतस्या नाम यमुनाऽऽसीत् । प्रतिलिपिकः अज्ञानतः एनां प्रसिद्धायाः यमुनायाः भिन्नामवगम्य पमुना इति कृतवान् । एवञ्च यपयोर्लेखे भ्रान्तिवशादेकरूपत्वं संभवति । तथाहि ३२तमे पत्रे 'चौरोऽब्रवीत्-यदहं शाकु-निकशास्त्रे कृतश्रमोऽस्मि । ततः शृगालाः किं वदन्तीति जानाति' इत्यत्र वाक्य-शेषात् स्पष्टमस्ति यत् जानामीति पाठो ग्राह्यः । हस्तलेखे वर्गनासिक्यस्थाने सामान्यतः अनुस्वारध्वनिरेव अङ्कितोऽस्ति । अत्र हि नव्यार्यभाषाणां प्रभावः असन्दिग्धः प्रमाणितो वर्त्तते । अतः प्रस्तुते ग्रन्थे सर्वत्र सम्बद्धेषु वर्गनासिक्यध्वनिषु परावर्त्तनं विहितमस्ति ।

क्वचिन्मसीलेपात् क्वचिन्मसीलोपाच्च मूललेखोऽपाठ्यः सञ्जातोऽस्ति । तत्र वर्ण्यविषयस्य तथ्याश्रितं परिशीलनं विधाय मूलपाठस्य पूरणार्थं प्रयासः कृतोऽस्ति । उदाहरणार्थं, काशीक्षेत्रस्य प्रसङ्गे 'सारूप्यमुक्तिदं नित्यम्' इत्यस्य परवर्त्तिचरणम-पाठ्यं विद्यते । तत्र मया 'मुनिषु प्राणिषु द्रुतमि'ति पाठः सम्पादितः । तत्रैव 'क्रोशमात्रं परिमितम्' इति वाक्यस्य शेषरूपं चरणं 'ययौ ताञ्च शुभां पुरीमि'ति न्यस्तं वर्त्तते । इत्थं मया प्रस्तुते ग्रन्थे ग्रन्थकारविद्यापतेः रचनायाः मूलपाठे सम-रूपीकरणे समुपलब्धानां सामग्रीणामुपस्थापनमुद्दिष्टमस्ति ।

*तथेदं ग्रन्थरत्नं विद्यापतिवाङ्मयरसिकानां विद्वत्समाजानां सविधौ पुरस्कृत्य मोमुदीति मन्मनः । एतद्विषये मदीया निर्भ्रान्ता धारणा वरीवर्ति यदिदं विद्वज्जनानां तुष्टिं विधास्यति । यथा चोक्तं स्वयं कविवरेण विद्यापतिना—*

**वस्तुदोषमनादृत्य गुणांश्चिन्वन्ति तद्विदः ।**
**अपि कण्टकिनः पुष्पे गन्धं जिघ्रति षट्पदः ॥**

(पुरुषपरीक्षा २-१०-४)

*अथ च, यासां विभूतीनां प्रेरणया साहाय्येन वा ममायं प्रयोगः सफलोऽभूत् ताः सर्वाः हृदयेनाभिनन्दयामि । सर्वप्रथमं मम पत्नी रञ्जना झा, एम० ए०,*

विद्यापति-कथासाहित्यानुसन्धात्री समायाति तस्याः साहाय्यं पदे पदे ग्रन्थेऽस्मिन् अवलम्बितमस्ति । तां प्रति कृतज्ञताज्ञापनमौपचारिकमेव भविष्यति । एवञ्च तां प्रति ममाधमर्ण्यमपि ज्ञापयितुं नेच्छामि, यतो हि पत्युर्यज्ञसंयोगादेव पत्नीत्वं भारतीयधर्म-दर्शनेषु समुद्दिष्टमस्ति। पटनाविश्वविद्यालयस्य संस्कृतविभागाध्यक्षाः प्राध्यापका गुरुवराः डा० बेचन झा महोदयाः, दिल्लीविश्वविद्यालयस्य संस्कृतविभागस्य प्राध्यापकाः अध्यक्षाः सुहृद्वराः डा० सत्यव्रतशास्त्रिमहानुभावाश्च स्वसम्मतिप्रदानेन मामनुगृहीतवन्तः । तेभ्यः हार्दिकान् साधुवादान् प्रहिणोमि । पर्य्यन्ते, प्रकाशनकृते कलिकातास्थ - मिथिलासांस्कृतिक - परिषद् धन्यवादार्हा, यस्याः शोधप्रकाशन-मालायां ग्रन्थस्यास्य प्रकाशनमभूत् । अतः परिषदः सदस्यान् प्रति मम हार्दिकी कृतज्ञता वरीवर्त्तीति शम् ।

प्रथमम्

# नेमिदेश-विवरणम्

( आदौ प्रस्तावना )

नत्वा गणपतिं साम्बं श्रीविष्णुं रविमम्बिकाम् ।
भूपरिक्रमणग्रन्थो[1] लिख्यते च भुवि नैमिषे ॥
देवसिंहनिदेशाच्च नैमिषारण्यवासिनः ।
शिवसिंहस्य[2] च पितुः सूनपीठनिवासिनः ॥
पञ्चषष्टिदेशयुतां पञ्चषष्टिकथान्विताम् ।
चतुष्खण्डसमायुक्तामाह विद्यापतिः कविः ॥
पुराणानि च तन्त्राणि काव्यानि त्रिमनीषया ।
विलोक्य च राज-प्रबन्धानि नवरत्नकृतानि च ॥
देवसिंहस्य रुचये विद्यापतिः कविर्महान् ।
वक्तुमारब्धवान् (कथा):[3] नानाप्रस्थानसंयुताः ॥
अग्निपुराण-वक्तारं सूतं वह्निसमुद्भवम् ।
जघान बलदेवो हि मस्तकमृषिमण्डले ॥
ब्रह्महत्यायुतो देवो मुनिवाक्यान्महीपते ।
आरेभे पापशान्त्यर्थं पृथिव्या हि प्रदक्षिणाम् ॥

( तत्र देशविवरणम् )

प्रथमं नैमिषं त्यक्त्वा द्रुपददेशं जगाम ह ।
यत्र काली महामाया गङ्गायास्तीरमध्यतः ॥
शतार्द्धक्रोशपरिमिता पुरत्रयमिता सदा ।
राजधानी च पृथुका त्रिशतग्रामसंयुता ॥

---

१. हस्तलेखे 'ग्रन्थ' मिति अशुद्धः पाठः । प० सं० १
२. तत्रैव—हस्तलेखपाठे 'सिवसिंहस्य' : नव्यार्यभाषायाः प्रभावः ।
३. हस्तलेखे—'तत्र' इति । कथा इति पाठ-सङ्गत्यर्थम् ।

शृङ्गवेरग्राममुखा ह्यगण्यादहनक्रिया ।
नरनारीप्रभृतयो न श्रष्टा यत्र भूपते ॥

त्रिदिवसं तत्र स्थित्वा च बलदेवो हि भूपतिः ।
नानाधनादिभिः पूजां[1] कामपालश्चकार ह ॥

शातनीपुरे[2] बलदेवश्च भैरवीं त्रिदशेश्वरीम् ।
सम्-(प०२) पूज्य विधिवद्भक्त्या कालकोठं जगाम ह ॥

यत्र द्रुपदभूपस्य शस्त्रागारं सजीवनम् ।
हुतासनं च तत्र पूज्य[3] कालिकां तटिनीतटे ॥

किंशुककाननान्ते च वेणपुरं ददर्श ह ।
तत्र योगिजातिवासः नाथदेवो हि सेव्यते ॥

भानुमन्तस्य[4] भूपस्य मालवदेशनिवासिनः ।
काष्ठाग्रामनिवासिनं धौम्यं मुनिं सर्वज्ञमीश्वरम् ॥

होरजपुरात् समानीतं भूपालदेशपवित्रकम् ।
द्रुपदपुरे मेलनं च कृतं च हलिना मुनेः ॥[5]

चातुर्य्यार्थं प्रवासेषु गद्यपद्यमयेन च ।
वचसा कौतुकं[6] वक्तुमुपचक्रमे हलं प्रति ॥

नानादेशीयराजन्यवैश्ययोश्चरितान्विताम् ।
प्रहर्षणार्थं देवस्य भाविभूतकथान्विताम् ॥
द्रौपदीहरणस्थाने विल्वकाननमध्यतः,
दर्भासने समासीनो[6] रात्रौ धौम्योमहामुनिः ।
प्रोवाच बलदेवाय कथां श्रमनिवारणे ॥

---

१. तत्रैव हस्तलेखे 'पूजा' ।
२. तत्रैव हस्तलेखे 'शातनीपुरम्' ।
३. 'पूज्य' पौराणिकः प्रभावः भाषायाम् । ह लेे० पत्र० सं० २
४. नृपविशेषस्य नाम ।
५. नव्यार्यभाषायाः वाक्यरीतिः । हस्तलेखे कौतुकमिति अशुद्धपाठः प० २
६. तत्रैव हस्तलेखे समासीनम् ।

त्रिकालज्ञमुनिरुवाच—

नयानुरोधेन गुणेन वाचां
कथारसस्यापि कुतूहलेन ।
बुधोऽपि वैदग्ध्यविशुद्धचेता:
प्रपञ्चमाकर्णयिता न किं मे ॥[१]

भाविकथां कलिसार्थां यथा भूपविचेष्टिताम् ।[२]
कथयामि कामपाल तव ज्ञानविवृद्धये ॥

पुरुषाः परिचीयन्ते पुरुषस्य परीक्षया ।[३]
तत्पुरुषपरीक्षेयं कथा सर्वमनःप्रिया ॥

( ततः कथावतरणम् । )

आसीदासमुद्रक्षिति(पत्ति) - (पत्र० ३) सहस्रशिरोमालारजोरञ्जितपादपद्मो नगर्यां चन्द्रातपायां पारावरो[४] नाम राजा। तस्य सर्वावयवसुन्दरी सर्वलक्षण-सम्पूर्णका[५] पद्मावती नाम कन्या बभूव। तस्याश्च शैशवापगममवलोक्य स राजा तदनुरूपं स्वकुलयोग्यं च वरमनुसन्दधानः सचिन्तो बभूव।

यतः—

अव्यापारपराङ्मुखस्य विततन्यायाभ्युपात्तश्रियो
भुञ्जानस्य सदैव पथ्यमरुजो रोषादिदोषद्विषः।
योग्यायोग्यवरानुनाथनविधावभ्यर्थनाभङ्गभी-
श्चिन्तामातनुते सतोऽपि हृदये स्वस्थस्य कन्यावतः ॥

---

१. 'पुरुषपरीक्षा' ग्रन्थेषु पाठभेदाः दृश्यन्ते। तत्र प्रस्तावमाकर्णयिता न किं मे, (पा)० पृ० १। प्रबन्धमाकर्णयिता न किं मे, (सु०) पृ० २। प्रबन्धमाकर्णयिता न मे किम्, (झा०) पृ० ३।

२. हस्तलेखे भ्रामकः पाठः—
भाविकथां कलिसायर्चं यत्सा भूपविचेष्टिता।

३. पुरुषपरीक्षापाठः—युक्तेरस्याः परीक्षया, पु०प० (पा०) पृ० २; (झा०) पृ० ३; (सु०) पृ० २।

४. हस्तलेखे पारावराः, प० सं० ३
पुरुषपरीक्षापाठः पारावीरो (झा०सु०पृ० २); पारावरो (पा०), पृ० २

५. सम्पन्नैका : पु०.प० (पा०), पृ० २

ततः किं करवाणीति वासुकीय[1]नामानमृषिमपृच्छत् ।

तथाहि—

नैकाकी निर्णयं कुर्यादिष्टे कृत्यविधौ[2] क्वचित् ।
सम्भवन्ति बुधस्यापि दोषा द्वेषभ्रमादयः[3] ॥

राजोवाच । मुने ! ममेयं पद्मावती कन्या विद्यते । तत्कमेतस्या वरं करवाणीति विमृष्यादिशतु भवान् । मुनिरुवाच । राजन् ! पुरुषं वरं कुरु । राजोवाच । मुने ! कथमपुरुषोऽपि वरः सम्भवति ? मुनिरुवाच । पृथिव्यां बहवः पुरुषाः पुरुषाकाराः वसन्ति । तान्पुरुषाकारान् परित्यज्य पुरुषं वरयेति ब्रवीमि । तथाहि—

लभ्यन्ते पुरुषाकाराः पुरुषः खलु दुर्लभः ।
वक्ष्यमाणेन चिह्नेन निखिलेनोपलक्षितः ॥

तद्यथा—

वीरः सुधीः सविद्य-(प० सं० ४) श्च पुरुषः पुरुषार्थवान् ।
तदन्ये पुरुषाकाराः पशवः पुच्छवर्जिताः ॥

राजोवाच । त एव वीरादयः कथं परिचेतव्याः ?

मुनिरुवाच ।

वीरः शौर्य्यविवेकाभ्यामुत्साहेन च मण्डितः ।
मातापित्रोरलङ्कर्त्तुं कुले[3] कुत्रापि जायते ॥
शौर्य्यं कार्पण्यराहित्यं विवेको धीर्हिताहिते ।
क्रियाप्रवृत्तिरुत्साहो वीरस्तैस्तु भवेत् त्रिभिः ॥

स तु चतुर्विधः—दानवीरो दयावीरो युद्धवीरः सत्यवीरश्च ।[4] तद्यथा—

दानवीरो हरिश्चन्द्रो दयावीरः शिविर्नृपः ।
युद्धवीरो भवेत् पार्थः सत्यवीरो युधिष्ठिरः ॥

---

१. पु० प० (पा०) वसूक्तिनामानम्, पृ० २
(भा०) सुबुद्धिनामानम्, पृ० ४
(सु०) सुबुद्धिनामानम्, पृ० २

२. ह० ले० भ्रामकः पाठः विधे, पृ० २

३. पु० प० (पा), कुलं, पृ० ४
पु० प० (सु०, भा०) : भूपरिक्रमणपाठस्य सुरक्षणम् ।

४. पु० प० (पा०) : पाठक्रमभेदः । तद्यथा—
दानवीरो दयावीरः सत्यवीरो युद्धवीरश्च । पृ० ४
पु० प० (सु०) : भूपरिक्रमणपाठवत्, पृ० ३

राजोवाच । मुने ! ते युगान्तरे पुरुषाः कलौ न शिक्षायामुपमानतां यान्ति । यतः—

कलौ शिक्षाहेतुर्न खलु कृतजातस्य चरितं
क्रियायां दृष्टान्तः समयकृतभेदो न घटते ।
न सा बुद्धिः न च वपुषि तेजस्तदधुना
न वा सत्त्वं[1] तादृक् कलिसमयसञ्जातजनुषाम् ॥

ततः कलिसमयसम्भूतानामेव पुरुषाणां कथाभिः परिचाययतु मां वीरं भवान् ।

मुनिरुवाच—

सत्ये त्रेतायुगे चैव द्वापरे भूभुजान्वयः ।[2]
कथितः सूरिभिः पूर्वैः[3] कथ्यते वै[4] कलौ मया ॥



---

१. तुलनीयः पुरुषपरीक्षापाठः
न वा सत्यम्—(पा०) पृष्ठ ४ ;
(झा) पृ० ५ ; (सु०) पृष्ठ ४

२. पुरुषपरीक्षायां पाठभेदाः—
भूभुजां नयः—(पा०) पृष्ठ ५ ;
भूभुजोऽन्वयः (झा) पृष्ठ ५ ; (सु०) ४

३. पु० प० पाठः—सर्वैः ।

४. पु० पाठः—च ।

# दानवीर-कथा

तत्र प्रथमं दानवीरकथा तावत्प्रस्तूयते । यतः—

स्मृतेनोच्चार्यमाणेन यत्नादाकर्णितेन च ।
नाम्नापि दानवीरस्य शुभं सर्व-(पृ० ५)त्र जायते ॥

आसीदुज्जयिनी नाम राजधानी । तस्यां विक्रमादित्यो नाम राजा बभूव । स चैकदा सिंहासनोपविष्टः केनापि वैतालिकेन पठ्यमानं श्लोकमेकं शुश्राव । तद्यथा—

विप्रैः सन्तुष्टचित्तैः प्रमुदितहृदयैर्वन्दिभिर्लब्धकामै-
र्भृत्यैः सिद्धाभिलाषैर्दिगवनिपतिभिर्वश्यतामाश्रयद्भिः ।
विद्वत्सार्थैः (कृतार्थैः) दिशि दिशि सुभटैः काञ्चनाभ्यर्च्यमानै-
र्नित्यं संस्तूयमानः स जयति नृपतिर्दानवीरो वडाहः ॥[1]

ततो राजा पठन्तं वैतालिकमब्रवीत् । रे रे वैवाहक![2] कस्तव नृपतिर्व्वडाहः ? केन दर्पेण तस्योत्कर्षं मम पुरतः प्रस्तौषि ? वैतालिक उवाच । देव ! मम वृत्तिरियं वैतालिकस्य यद्वीराणां यशः परितः प्रस्तूयते । तथाहि—

शूरान्निरोधयति[3] बोधयति प्रमत्तान्
कौत्सं विमोचयति कापुरुषान् वचोभिः ।
ब्रूते विपक्षवचनं पुरतो नृपाणाम्
वैतालिकः कृपणतां म्रियते न याति ॥

अतएव मामर्थे शूराः परितोषयन्ति, अहञ्च तेषामंकुरितं यशः[4] प्रतिदिशं पल्लवयामि । देवो यदि तदाकर्णने सामर्षस्तदा तदधिकं तदुपमं वा पौरुषं[5] वितनोतु । कुप्यति कुतः ?

---

१. पुरुषपरीक्षायां बलाहः इति पाठः, (झा०) पृष्ठ ६
पु० प० (सु०), पृष्ठ ५

२. पुरुषपरीक्षापाठः वैतालिक इति ।

३. पु० प० (सु०) निबोधयति पाठः, पृष्ठ ५

४. पु० प० पाठः, यशस्तरुमिति, (झा०) पृष्ठ ६

५. हस्तलेखे निर्विभक्तिकं पदं पौरुष इति, पत्र ६

राजोवाच । किं तत्पौरुषम् ? वैतालिकः कथयति । देव ! तस्य वडाहनाम्नो भूमिपतेर्द्वारि प्रतिरात्रं मन्त्रिण एकं सौवर्णमायतनमुत्पादयन्ति ।[१] प्रतिदिनं तच्छे-(पत्र संख्या ६) दयित्वा स राजा सुवर्णानि[२] ब्राह्मणेभ्यो दरिद्रेभ्यश्च वितरति । तद्दानपरितुष्टास्ते सर्वे सर्वतस्तस्य कीर्तिगाथां गायन्ति । राजोवाच । वैतालिक ! सत्यमेतत् ? वैतालिक उवाच । राजन् ! अतथ्यं के कथयन्ति ? यदा भवान् न प्रत्येति तदा स्वकीयेन[३] चारपुरुषेण निरूपयतु । राजोवाच । वैतालिक ! यावदेत-न्निरूपयामि तावत्त्वमिहैव नगरे तिष्ठ । यदि तथ्यवाग् भविष्यसि तदा रत्नैस्त्वां पूजयिष्यामीत्यभिधाय वैतालिकं बहिः प्राहिणोत् ।

राजा चान्तःपुरं गत्वा रहस्यचिन्तयत् । अहो महदाश्चर्यं वडाहचरित्रम् ! अथवा विधातुः प्रपञ्चे किमसम्भाव्यम् ? तत्पश्यामि गत्वा कौतूहलमिदमिति परामृष्य राजधुरं सचिवे निवेश्याग्निकोकिलनामानौ वेतालावाहूय तयोः स्कन्धमारुह्य जगाम वडाहस्य राजधानीम् ।

तत्र च सुभटवेषधारी राज्ञो वडाहस्य दर्शनं कृत्वाऽब्रवीत् । देव ! असमसम-राक्रान्तस्य[४] विक्रमादित्यस्य राज्ञो दौवारिकोऽहम् । भवतः कीर्तिमाकर्ण्य भवन्तं सेवितुमागतोऽस्मीत्यभिधाय प्रणनाम । राजोवाच—रे दौवारिक ! त्वं महतो महीपालस्य दौवारिकोऽसि तन्ममापि द्वारमेवाधितिष्ठ ।

ततः प्रभृति विक्रमादित्यो द्वारि[५] परमाद्भुतं प्रत्यहमुत्पाद्यमानं सुवर्णायतनं तत्सुवर्णवितरणं चाऽपश्य-(पत्र संख्या ७) त् । ततश्चिन्तयामास । कुत एतस्य सुवर्णायतनम् ? कुतो मम नास्ति ? पुरुषशक्ये[६] व्यापारे पुरुषेण नोदासितव्यम् । कारणमत्र निरूपयितुं युज्यते । तत्कारणजिज्ञासुरभवत् ।

एकदा तु रात्रौ महानिशाभागे सकलेषु पुरजनेषु राजपरिजनेषु प्रसुप्तेषु प्रासा-दादेकाकिनं निःसरन्तं नगराच्च बहिर्भवन्तं वडाहं ददर्श । दृष्ट्वा च निभृतक्रमेण तेनालक्षितस्तदनुगमनपरायणो बभूव । वडाहस्तु नदीतीरे नृत्यद्वेतालपदास्फाल-सातङ्कडाकिनीडमरुडात्कार-फेरवीसहस्रफेत्कार-सरभसराक्षसीक्रीडाक्रूडितं नर-

---

१. पुरुषपरीक्षायां पाठः—प्रतिरात्रि एकं सौवर्णमायतनमुत्पद्यते । (सु०) पृष्ठ ५

२. हस्तलेखे भ्रामकः पाठः-सुवर्णानी ब्राह्मणेभ्यः । पत्र ६

३. तत्रैव हस्तलेखे 'स्वाकीयेन' पाठः ।

४. पुरुषपरीक्षा पाठस्तु 'असमसमरसाहसाङ्कस्य', (सु०) पृष्ठ ६ ; (भा) पृष्ठ ७

५. हस्तलेखे पाठाशुद्धिः "द्वारी', पत्र संख्या ६

६. पुरुषपरीक्षायां 'पुरुषवश्ये' (सु०) पृष्ठ ६ ; भा पृष्ठ ७

कपालकङ्कालचिताङ्गार[1]चित्रितं परमभयानकं श्मशानदेशमाससाद[2]। तत्र नद्यां कृतस्नानो भैरवपुरुषैर्नरचर्मरज्जुभिर्बद्धः प्रबलानलसन्तप्ततैलपूर्णे कटाहे निक्षिप्तश्च। स तत्र महतीं वेदनामनुभवन् महता कष्टेन प्राणांस्तत्याज। तस्य त्यक्तप्राणस्य तैलसुसिद्धानि मांसानि भगवत्या चामुण्डया प्रत्यक्षीभूय खादितानि। भक्षितमांसा च भगवती परमपरिसन्तुष्टा तदस्थीन्यमृतेन सिक्त्वा तं पुनस्तथैव ससर्ज। सृष्टो[3] वडाहः पुनरुत्थाय भगवतीं प्रणमाम। वरं स वव्रे। वडाह उवाच। भगवति[4] वदान्यतया सम्भावितस्य पुरुषार्थिजनमनोरथपूरणाशक्तिर्म-(पत्र संख्या ८) रणादप्यतिरिच्यते। ततोऽहं मरणमङ्गीकृत्य याचकजनवाञ्छापूरणकामो निजमांसेन भगवतीमर्च्चितवानस्मीति। मातः पूरय मे कामनाम्। देव्युवाच। वडाह![5] प्रभाते तव द्वारि पूर्ववदेव भूयात् सौवर्णमायतनम्। ततो देव्या वरं लब्ध्वा प्रत्यावृत्तो वडाहः कृतार्थो निजमागारमाजगाम।[6]

विक्रमादित्यस्तत्सर्वं दृष्ट्वा चिन्तयामास। सत्यं कथितं वैतालिकेन। दानवीर एवायं वडाहः यतो दानार्थं प्रत्यहं प्राणपरिवर्त्तेन धनमर्जयति। भगवती करुणावत्यपि कथमेनमेकेनैव प्राणपरित्यागसाहसेन कृतार्थं न कुरुते? भवतु तावदग्रिमा निशा। यदुचितं तत्करिष्यामीति परामृष्य राजद्वारं गत्वा निजाधिकारमलञ्चकार।

तदग्रिमनिशायां तु सचिवसामन्तभृत्यपरिवारितो वडाहः यावदेकान्तमपेक्षते तावदसुप्तेष्वेव नगरलोकेषु निःपरिजनो विक्रमादित्यः प्रदोष एव तं प्रदेशं[7] गत्वा तस्यां नद्यां स्नात्वा तस्मिन्नेव सन्तप्ततैलपूर्णे कटाहे झम्पमकरोत्। आर्द्रमांससंयोगात्तप्ततैलकटकटाशब्देन भगवत्या तत्रागत्य तस्य मांसानि खादितानि; तदस्थीन्यमृतेन सिक्तानि। ततो जीवित्वा पुनरुत्थितं विक्रमादित्यं वडाहभ्रमेण यावद्भगवती वरेणानुगृहीतुमिच्छति[8], तावदनेन पुनः कटा-(पत्र संख्या ९) हे झम्पः कृतः। पुनश्च

१. हस्तलेखे चिताङ्कार पाठः, पत्र ७

२. पुरुषपरीक्षायां पाठः देशमाजगाम इति।

३. तत्रैव, हस्तलेखे अशुद्धः पाठः 'सष्टो वडाह'।

४. अशुद्धपाठो भगवती, तत्रैव।

५. हस्तलेखे वडाहस्य, पत्र संख्या ८; स्य इति 'श्वः' भवितुमर्हति।

६. पुरुषपरीक्षायाः पाठः—निजमन्दिरमाजगाम, तुल० (सु०), पृष्ठ ७

७. पुरुषपरीक्षायां देशमिति पाठ; (झा०) पृष्ठ ६; (सु०) ८

८. हस्तलेखे अनुग्रहीतुमिति अशुद्धः पाठः, तत्रैव पत्र ८

भगवत्या तन्मांसानि खादितानि । एवं पुनर्जीवितः पुनः पुनः कृतझम्पः[१] सात्त्विक-स्वभावाद् विक्रमादित्योऽयमिति भगवत्या लक्षितो भाषितश्च । देव्युवाच । रे विक्रमादित्य ! त्वय्यहं परितुष्टैवास्मि । ततो लब्धाष्टसिद्धिरपि कथमेतावत् साहसं प्रकुरुषे ? अहं न त्वदीयेन वा तदीयेन मांसेन तृप्यामि । किन्तु पुरुषसाहसं परीक्ष-माणा कृत्रिमां बुभुक्षां तृप्तिं च दर्शयामि । सम्प्रति तव साहसपरितुष्टास्मीति । वरं वृणु ।

तदनन्तरं विक्रमादित्यः प्रणम्य वरं वव्रे । विक्रमादित्य उवाच । देवि ! भक्तवत्सलासि । जगन्मातः ! वडाहे कृपालुरहं त्वामाराधितवानस्मि । ततो बिना मरणसाहसेनैव प्रत्यहं वडाहस्य द्वारि सौवर्णमायतनं सम्पद्यताम् । भगवत्युवाच । तथा भवतु । इति वरं लब्ध्वा विक्रमादित्यः स्वराज्यं जगाम । यथार्थवचनं वैता-लिकमाहूय रत्नैस्तुरङ्गैर्वासोभिर्वारणैश्च पूजयामास ।

वडाहस्तु सुप्तेषु नगरजनेषु निर्गते निशाभागे यदा श्मशानदेशं गतस्तदा न किमपि दृष्टवान् । किन्त्वाकाशवाचं शुश्राव[२] । रे वडाह ! विक्रमादित्यस्तव खेदमपनीतवान् । इत्यनिर्धारितार्थमिव वाचं प्रत्याकलयन् प्रातः किमर्थिभ्यो दास्या-मीति चिन्ताव्याकुलितः परावृत्य गृहं गतोऽपि पर्य्य-(प० सं० १०)ङ्क-शयानोऽपि निद्रां न लेभे । तन्द्रापरिवृत[३] एव प्रातरागत्य दौवारिकैः प्रबोधितः । सौवर्णमायतनं पूर्ववदेव द्वारि दृष्ट्वा कृतार्थो बभूव ।

आकाशसरस्वत्याः प्रकरणबलेनार्थं ज्ञातवान् विक्रमादित्यस्य प्रसादान्मम पुनर्म-रणायासेन बिना सिद्धिरियं जातेति । निर्धारितमप्यर्थं तस्य संसदि[४] वैतालिकः समागत्य पुनरुक्तं चकार । तथाहि—

पुंसां प्रथममुल्लेख्यो राजा विक्रमकेशरी ।
कल्पते कल्पवल्लीव दानवीरेऽपि यद्दया ॥

**इति विद्यापतिकविविरचिते भूपरिक्रमणग्रन्थे दानवीरकथा समाप्ता ।**

---

१. हस्तलेखे पाठाशुद्धिः लिपिकारस्य भ्रमवशात् ; कृतं झम्प इति ।

२. हस्तलेखे 'सुश्राव' इति पाठः, पत्र संख्या ९ ; स्पष्टतः नव्यार्यभाषायाः प्रभावः ।

३. पुरुषपरीक्षायां पाठभेदाः दृश्यन्ते । तन्त्रापरिवृत इति, (झा) पृ० १० : तत्र जाग्रदेव पुनः प्रातरागत्य, (सु०) पृष्ठ ९

४. हस्तलेखे भ्रामकः पाठः 'सदि' इति, पत्र संख्या १०

द्वितीयम्

# ब्रह्मावर्त्त-विवरणम्

दानवीरकथां श्रुत्वा बलदेवोऽतिहर्षगः ।
पुनः पप्रच्छ सुमुनिं कथामन्यां वदाऽथ च ।।
हारभूमिं परित्यज्य सप्तयोजनव्यत्यये ।
ब्रह्मावर्त्तं चागतवान् चान्तर्वेदस्य मध्यतः ।।
त्रिकालज्ञमुनिवरं सङ्गे नीत्वा हलायुधः ।[1]
कलिसन्ध्याभाविकथाशुश्रूषासंयुतो बली ।।
विस्तीर्णपुरीमध्ये च कल्याणीनदीसन्निधौ ।
पञ्चदिनं तीर्थयात्रां चकार ह मुदान्वितः ।।
परिहारकाननं च संयतो हि महाहली ।
प्रदक्षिणत्रयं (कृत्वा) कालेश्वरगुहान्तरे ।।
नालिकानदीतीरे च कालेश्वरं प्रयत्नतः ।
सम्पूज्य बलदेवो हि वाल्मीकाश्रमं जगाम ह ।।
अहल्याकूपो[2] यत्रैव गभीरे पिलुकानने ।
सीताप्रसवस्था-(प०सं० ११) नं च सौरिं लोके चमत्कृताम् ।।
कल्याणीसङ्गमे स्नात्वा नानादानं विधाय च ।
वाल्मीकडिंचं भूपाल ( जगाम ह महाबली )[3] ।
कुशलवयोधनस्थानं दृष्ट्वा हर्षमुपागतः ।।
पञ्चक्रोशात्मिका भूमिः महापातकनाशिनी ।[4]
कुलपिपुरं च तत्रैव कल्याणीतटिनीतटे ।
राजपुत्रा हि बहवो यत्र सन्ति सहस्रशः ।।

---

१. नव्यार्यभाषायाः वाक्यरीतिः ।

२. हस्तलेखे भ्रामकः पाठः 'हल्याकूपं', प० सं० १०

३. हस्तलेखे पूर्वोक्तपाठस्यावृत्तिः । पत्र सक्या ११

४. हस्तलेखे तु 'पञ्चक्रोशात्मिकां भूमिः महापातकनाशिनी'ति पाठः, पत्रसंख्या ११

विलोक्य कामपालो हि त्रिकालज्ञपुरस्कृतः ।
सौरिस्थाने पुनर्गत्वा चोवास पञ्चमीं निशाम् ।।
कल्याणपुरस्य भूपालो ब्रह्मदत्तो महीपतिः ।
बलदेवतीर्थयात्रां श्रुत्वा पदान्तिकं पुरा ।
वन्दनां कृत्वा[1] सादरेण बलदेवं महीपतिः[2] ।।
द्वादशयोजनपरिमितो ब्रह्मावर्त्तो निरूपितः ।
ब्रह्मावर्त्तद्वयं राजन् प्रसङ्गात् हि निरूप्यते ।।
आमोदकाननं यत्र तथा च कामकाननम् ।
स्वायम्भुवमनोः स्थानं सरस्वतीकुण्डञ्च तत्रैव ।।
वेणभूपस्य वासो हि चाधर्मिणां शिरोमणेः ।
विचारो यस्याधिकारे च नैव जातो महीपते ।।
जातिसंकरसृष्टिश्च पुरा येन निरूपिता ।
अन्यायांश्च विलोक्य मुनयो ददुः शापाञ्च वेणभूभृते ।।
यस्य पुण्यांशेन जातो राजा हि पृथुसंज्ञकः ।
पापांशेन म्लेच्छाश्च जाता हि मुनिशापतः ।।
वासार्थं गतवन्तो[3] हि चोपद्वीपान् हि सागरे ।
हापानं सिंहलद्वीपे[4] गतवान् हि (प०सं० १२) मुनिभयात् ।।
लघुब्रह्मावर्त्तदेशोऽयं पञ्चपुरयुतो भुवि ।
कर्णपुरं कल्याणपुरं चतुर्वेदपुरं तथा ।।
खर्जूरीपुरं लोलपुरं यत्र दीर्घश्रवा नृपः ।
पञ्चशतग्रामा यत्रैव सस्याढ्या चैव चोर्वराः[5] ।।
ब्रह्मावर्त्तस्य वृत्तान्तं बलदेवे[6] निवेद्य च ।
गतवान् कल्याणपुरं ब्रह्मदत्तो महीपतिः[7] ।।
अथान्तरे रात्रिभागे सौरिस्थाने महामुनिः ।
दयावीरकथां रम्यां हलिने कथितवान् पुरा[8] ।।

---

१. 'कृतवान्' इत्यर्थे प्रयोगः, हस्त लेख पत्र संख्या ११
२. तत्रैव, अशुद्धः पाठः 'महपतिः' ।
३. हस्तलेखे 'वासार्थ' इति पाठः, प० ११ नव्यार्यभाषाप्रभावः ।
४. हस्तलेखे, तत्रैव सिंहल इति ; प० ११
५. तत्रैव : निर्विभक्तिकं पदं चोर्वर इति ; प० ११
६. नव्यार्यभाषायाः वाक्यरीतिः ।
७. हस्तलेखे अशुद्धः पाठः माहीपति ; प० ११
८. पौराणिकी वाक्ययोजना ।

# दयावीरकथा

दयालुः पुरुषः श्रेष्ठः सर्वजन्तूपकारकः ।
तस्य कीर्त्तनमात्रेण कल्याणमुपपद्यते ॥

अस्ति कालिन्दीतीरे योगिनीपुरं नाम नगरम् । तत्र अलावदीनो नाम यवनराजो[1] बभूव । स चैकदा केनापि निमित्तेन महिमासाहि नाम्ने सेनान्ये चुकोप । स च यवनस्वामिनं प्रकुपितं प्राणग्राहकं च ज्ञात्वा चिन्तयामास । सामर्षो राजा विश्वसनीयो न भवति । तथाहि—

राजानः पिशुनाः सर्पा विश्वस्तव्या न कुत्रचित् ।
अतर्कितं विनिघ्नन्ति दर्शयन्तोऽपि सम्भ्रमम् ॥

तदिदानी यावदनिरुद्धोऽस्मि तावदेवेतः क्वाऽपि गत्वा निजप्राणरक्षां करोमीति परामृष्य सपरिवारः[2] पलायितः । पलायमानोऽप्यचिन्तयत् यत्सपरिवारस्य दूरगमनमशक्यम् । परिवारं परित्यज्य[3] पलायनमपि नोचितम् । यतः—

जीवितार्थं[4] कुलं त्यक्त्वा योऽतिदूरं व्रजेत् ।
लोकान्तरगतस्येव किं तस्य जीविते-(प० सं० १३) न वा ॥

तदिहैव दयावीरं हम्मीरदेवं समाश्रित्य तिष्ठामीति परामृष्य स यवनो[5] हम्मीरदेवमुपगम्याह । महिमासाहिरुवाच । देव ! बिनापराधं हन्तुमुद्यतस्य स्वामिनस्त्रासेनाहं तव शरणमागतोऽस्मि । यदि मां रक्षितुं शक्नोषि तदा विश्वासं देहि । नो चेदितोऽन्यत्र गच्छामि ।

राजोवाच । यवन ! मम शरणागतं मयि जीवति यमोऽपि त्वां पराभवितुं न शक्नोति[6], किं पुनर्यवनराजः ? तदभयं तिष्ठ ।

ततस्तस्य राज्ञो वचनेन स यवनसचिवस्तस्मिन् रणस्तम्भनाम्नि दुर्गे निःशङ्कमुवास । क्रमेण यवनराजस्तत्राऽवस्थितं तं विदित्वा परमसामर्षः करितुरगपदाति-

---

१. हस्तलेखे 'जवनराजो', प० १२

२. तत्रैव, अशुद्धः पाठः सपरीवारः, प० १२

३. हस्तलेखे परीत्यज्य, प० १२

४. पुरुष परीक्षायां पाठः 'जीवनार्थम्' (झा), पृष्ठ ११

५. हस्तलेखपाठः जवनो, प० सं० १३

६. हस्तलेखे अशुद्धः पाठः शक्नोसि, प० सं० १३

पदाघातैर्धरित्रीं चालयन् काहलकोलाहलैर्दिशो मुखरयन् कियद्भिरपि[1] वास-रैर्लङ्घितवर्त्मा दुर्गद्वारमागत्य शरासारैः प्रलयघनवृष्टिं दर्शयामास। हम्मीरदेवोऽपि परिखागम्भीरचतुर्मेखलं कुन्तदन्तुरितप्राकारशिखरं[2] पताकाप्रबोधितद्वारश्रियं दुर्गं कृत्वा ज्याघातकर्णकटुभिवर्णिर्गगनमण्डलमन्धं कारितवान्।

प्रथमयुद्धानन्तरं यवनराजेन हम्मीरदेवं प्रति दूतः प्रहितः। दूत उवाच। राजन् हम्मीर! श्रीमान् यवनाधिराजस्त्वामादिशति यन्ममापथ्यकारणं[3] महिमा-साहिं परित्यज्य देहि। यद्येनं न दास्य-(पत्र संख्या १४)सि तदा श्वस्तने[4] प्रभाते तव दुर्गं तुरगखुराघातैश्चूर्णाविशेषं कृत्वा महिमासाहिना सह त्वामन्तकपुरं नेष्यामि। हम्मीरदेव उवाच। रे दूत! त्वमवध्योऽसि। तवाऽहं किं करवाणि? अस्योत्तरं तव स्वामिने खड्गधाराभिरेव दास्यामि न वचोभिः। मम शरणागतं यमोऽपि विपक्षदृष्ट्या वीक्षितुं न शक्नोति किं पुनर्यवनराजः?[5]

ततो निर्भर्त्सिते दूते गते सति यवनराजः कुपित्वा युद्धसमुद्धुरो बभूव। एवमुभ-योरपि बलयोर्युद्धे प्रवर्त्तमाने त्रीणि वर्षाणि यावत् प्रत्यहं सम्मुखाः पराङ्मुखाः प्रहारिणः पराभूता हन्तारो हताश्च परस्परमुभयबलयोधा बभूवुः। पश्चादर्धा-वशिष्टसुभटे यवनसैन्ये दुर्गे ग्रहीतुमशक्ये यवनराजः परावृत्य निजनगरगमनाकाङ्क्षी बभूव। तञ्च भग्नोद्यमं दृष्ट्वा रायमल्लरामपालनामानौ हम्मीरदेवस्य द्वौ सचिवौ[6] दुष्टौ यवनराजमागत्य मिलितौ। तावूचतुः। यवनराज! भवता। क्वापि न गन्तव्यम्। दुर्गे दुर्भिक्षमापतितम्। आवां दुर्गस्य मर्मज्ञौ। श्वः परश्वो वा दुर्गं ग्राहयिष्यावः। ततस्तौ दुष्टसचिवौ पुरस्कृत्य यवनराजेन[7] दुर्गद्वाराण्यवरुद्धानि।

तथा सङ्कटं दृष्ट्वा हम्मीरदेवः स्वसैनिकान् प्रत्युवाच। रे रे जालमदेव-प्रभृतयो[8] योधारः[9]। परिमितबलो-(प० सं० १५)ऽप्यहं शरणागतकरुणया प्रवृद्धबलेनापि यवनराजेन समं योत्स्यामि। एतच्च नीतिविदामसम्मतं कर्म।

---

१. पुरुषपरीक्षापाठः कियद्भिः, (झा) पृष्ठ सं० ११ ; (सु) ११

२. हस्तलेखे अशुद्धः पाठः 'शिखिरः', प० १३

३. पुरुषपरीक्षायां 'कारिण' मिति पाठः (झा) पृष्ठ सं० १२ ; (सु०) पृष्ठ सं० ११

४. हस्तलेखे भ्रामकः पाठः स्वस्तसेन, प० सं० १४

५. तत्रैव, जवनराजः, प० १४

६. हस्तलेखे 'सचवौ', प० १४

७. हस्तलेखे भ्रामकः पाठः 'यवनराज्येन', प० सं० १४

८. पुरुषपरीक्षायां रे रे जाजदेवप्रभृतय इति पाठः (झा) पृष्ठ सं० १२; (सु०)१२

९. हस्तलेखे योधाः, पत्र संख्या १४

ततो यूयं सर्वे दुर्गाद्बहिः स्थानान्तरं गच्छत। त ऊचुः। देव! भवान् निरपराधो राजा (शरणागतस्य) यवनस्य करुणया सङ्ग्रामे मरणमङ्गीकुरुते। वयं भवतो जीव्यभुजः कथमिदानीं भवन्तं स्वामिनं परित्यज्य (का-) पुरुषपदवीमनुसरिष्यामः? किञ्च श्वस्तने प्रभाते देवस्य शत्रुं हत्वा प्रभोर्मनोरथं साधयिष्यामः। यवनस्त्वयं वराकः स्थानान्तरं प्रहीयताम्[1]। तेन रक्षणीयरक्षा सम्भवति। तेन रक्षानिमित्तक एवायमारम्भो यतः। यवन उवाच। देव! किमर्थं ममैकस्य विदेशिनो रक्षार्थं सपुत्रकलत्रं स्वकीयराज्यं विनाशयिष्यसि? ततो मां परित्यज्य देहि। राजोवाच। यवन! मैवं ब्रूहि। यतः—

भौतिकेन शरीरेण नश्वरेण चिरस्थितम्[2]।
लप्स्यमानं यशः को वा परिहर्तुं समीहते॥

किञ्च यदि मन्यसे तदा निर्भयस्थानं त्वां प्रापयामि। यवन उवाच। राजन्! मैवं ब्रूहि। सर्वप्रथमं[3] मयैव विपक्षशिरसि खड्गप्रहारः कर्त्तव्यः। स्त्रियः परं[4] बहिः क्रियन्ताम्। स्त्रिय ऊचुः। कथं नः स्वामिनः शरणागतरक्षार्थं सङ्ग्राममङ्गीकृत्य स्वर्गयात्रामहोत्सवे प्रवर्त्तन्ते। कथं तैर्विना भूतले स्थास्यामः। यतः—

मा जीवन्तु स्त्रियो-(प० सं० १६)ऽनाथा वृक्षेणेव विना लताः।
साध्वीनां जगति प्राणाः पतिप्राणानुगामिनः॥

ततो वयमपि वीरस्त्रीजनोचितं हुताशनप्रवेशमाचरिष्यामः। एवम्—

भटैरङ्गीकृतं युद्धं स्त्रीभिरिष्टो हुताशनः।
राज्ञो हम्मीरदेवस्य परार्थं जीवमुज्झतः॥

ततः प्रभाते युद्धे प्रवर्त्तमाने हम्मीरदेवः सत्वरतुरगारूढो निजसुभटसार्थसहितः पराक्रमं कुर्वाणो दुर्गान्निःसृत्य खड्गधाराप्रहारैर्विपक्षबलवाजिनः पातयन्, कुञ्जरान् घातयन् (पदातीन् निर्यातयन्[5]), भयं प्रवर्त्तयन्, कबन्धान् नर्त्तयन्, रुधिरधाराप्रवाहेन मेदिनीमलङ्कृत्य शरशल्लितसर्वाङ्गस्तुरगपृष्ठे[6] त्यक्तप्राणः सम्मुखः

---

१. हस्तलेखे प्रहीयुताम्, प० सं० १५
२. पुरुषपरीक्षापाठः 'चिरस्थिरम्'; (भ्मा०) १३; (सु०) १२
३. तत्रैव, सर्वथा प्रथममिति पाठः (भ्मा) १३; (सु) १२
४. किन्त्वर्थप्रयोगे मैथिलीभाषाप्रयोगः।
५. पुरुषपरीक्षायां प्राप्तः पाठः; (भ्मा) १०, (सु०) १३
६. हस्तलेखे पृष्ठ इति पाठः, प० सं० १६

सङ्ग्रामभूमौ निपपात सूर्यमण्डलभेदी च बभूव। तथाहि—

ते प्रासादा निरुपमगुणास्ताः प्रसन्नास्तरुण्यो[1]
राज्यं तत्र[2] द्रविणबहुलं ते द्विपास्ते तुरङ्गाः।
त्यक्तुं यन्न प्रभवति जनः किञ्चिदेकं परार्थे
सर्वं त्यक्त्वा समिति पतितो हन्त! हम्मीरदेवः[3]॥
गद्यपद्येन विशदं कृत्वा विद्यापतिः कविः।
श्रावयामास राज्ञे च देवसिंहाय भूभृते॥

**इति विद्यापतिकविविरचिते भूपरिक्रमणे ब्रह्मावर्त्ते दयावीरकथा समाप्ता।**

---

१. तत्रैव 'तेरुण्यो' इति, प० १६
२. हस्तलेखे द्रवेण, इति, प० १६
३. पुरुषपरीक्षायाः 'हम्वीर' इति पाठः प्रथममेव प्राप्यते।

तृतीयम्

## यज्ञभूमि-विवरणम्

ततः पुरा कामपालो ब्रह्मावर्त्तं विहाय च ।
सङ्गे नीत्वा त्रिकालज्ञं जगाम यज्ञभूमिकम् ॥

कर्णपुरं परित्यज्य हस्तिकर्णपुरं (तथा) ।
द्विजभूमिं विहायैव प्रयागं प्राप्तवान् ह- (प०१७) ली ॥

तीर्थराजमहाक्षेत्रं नदीत्रयसमन्वितम् ।
सितासितारुणा राजन् वेणीरूपेण संस्थिता ॥

आबालचन्द्रादारभ्य[1] प्रतिष्ठानपुरावधि ।
नीलकण्ठं पुरं यावत् पञ्चयोजनसम्मतम् ॥

तन्मध्ये पञ्चक्रोशश्च कामनासिद्धिदः कलौ ।
सोमेश्वरं दशाश्वमेधञ्च शूलेशं च महीपते ॥

सर्वत्र बलदेवश्च यात्रां चक्रे नियमनात्[2] ।
चतुर्दिनं प्रयागे च त्रिकालज्ञेन सहाश्रितः ॥

बलदेवः ह्यु वासात्र[3] नानाकौतुकसंयुतः ।
भरद्वाजाश्रमे चैव दिवसद्वयमुवास ह ॥

सहस्रब्राह्मणानाञ्च चकार भोजनं हली ।
महाप्रयागप्रदच्छिणं[4] कृत्वा च बहुमानतः ॥

प्रयागस्योत्तरे भागे योजनैकव्यतिक्रमे ।
मलकाख्यग्रामो हि बलदेवेन दर्शितः ॥

---

१. 'हस्तलेखे आबालचन्द्रसमारभ्य', प० १७

२. तत्रैव, अशुद्धपाठः नियामनात्, प० १७

३. तत्रैव, भ्रामकः पाठः 'ह्यु वासश्च', प० १७

४. तत्रैव, हस्तलेखपाठः 'महाप्रयागप्रदक्षिणं चैव कृत्वा च बहुमानतः' ।

आम्लकीनां[1] काननानि यत्र रम्याणि सन्ति हि ।
मधुग्रामे कामपालो भूरि मधु पीतवान् पुरा ॥
निकटे यस्य ग्रामस्य गङ्गा वहति वेगतः ।
मुकुन्दब्रह्मचारी च कलिसार्थं महीपतिः ॥
मधुग्रामस्य निकटे फतेपुरग्राममध्यतः ।
रारकविपिने यस्य सिद्धिकुण्डे ह्युवास ह ॥
स एव ब्रह्मचारी च शूलकण्ठेश्वराग्रतः[2] ।
कामनासिधारायाञ्च[3] प्राणत्यागं चकार ह ॥
अथान्तरे कामपालो चन्द्रपुरं जगाम ह ।
त्रिकालज्ञेन मुनिना (प०सं० १८) समश्च पश्चिमेऽशके ॥
यत्र[4] पूर्वं राजयक्ष्मारोगपीड़ाभयात् शशी ।
तपस्तेपे महीपाल ततश्चन्द्रपुरं श्रुतम् ॥
चन्द्रपुरस्य निकटे[5] मयदैत्येन निर्मितः ।
मायग्रामो हि भूपाल यत्र दुर्गं पुरा स्थितम् ॥
येनैव मयदैत्येन हस्तिनापुरमध्यतः ।
महापाषाणं ह्यर्पितवान् राज्ञे युधिष्ठिराय ॥
मायग्रामस्य वृत्तान्तः सरित्सागरपुस्तके ।
द्रष्टव्यः देवसिंहस्यापि[6] जिज्ञासा चाधिका यदि ॥
प्रयागदक्षिणे भागे सार्द्धयोजनव्यत्यये ।
करेलाख्यमहाग्रामो वर्त्तते[7] चातिशोभनः ॥

---

१. हस्तलेख पाठः 'आमलकीनाम्', पत्रसंख्या १७
२. तत्रैव 'शूलठंकेश्वराग्रतः वर्णविपर्ययमूलकः पाठः, पत्र १७
३. छन्दानुरोधेन 'च' इत्यस्यान्तर्निवेशः । हस्तलेखे अप्राप्तिः ।
४. पूर्वमित्यस्यार्थे पूर्वे, पुराणभाषारीतिः ।
५. हस्तलेखे तु "चन्द्रपुरस्य निकटे मायग्राम मायदैत्येन निर्मितः' प० १७
६. तत्रैव, 'देवसिंहापि' अशुद्धपाठः ।
७. हस्तलेखे वर्त्तत, प० सं० १८

चकोरनयनी[1] ग्रामो तीर्थराजस्य दक्षिणे ।
चकोरचकोरी[2]पक्षिप्रख्यानं यत्र चाभवत् ॥

अरेलग्रामः[3] सेराजग्रामोऽपि यत्र दुर्गश्च मृण्मयम् ।
महाप्रयागप्रदक्षिणं कृत्वा भरद्वाजाश्रमं गतः ॥

कुसुमकरालिराजधानीनिःसृतो वाग्मी भूभुजः ।
जन्मेजयस्य स्वसुर्वंश्यो बलराजमुपागतः ॥

अथ रात्रौ त्रिकालज्ञः युद्धवीरकथाः शुभाः ।
अवादीत् बलदेवाय पुराणक्रमशः पुरा ॥

---

१. हस्तलेखे 'चोकोरनयनीग्राम' इति, प० १८
२. हस्तलेखे चकोरचकरीति पाठः, प० १८
३. 'हस्तलेखे अरेलग्रामो' इति अशुद्धः पाठः, प० १९

# अथ युद्धवीरकथा

तद्‌यथा—

कातरः शूरतां याति क्रियावानलसो भवेत्।
युद्धवीरकथां श्रुत्वा जयमाप्नोति मानवः॥

आसीन्मिथिलायां कर्णाटकुलसम्भवस्य नान्यदेवनाम्नः राज्ञः पुत्रो मल्लदेव-नामधेयः कुमारः। स च सिंह इव स्वभावात् पराक्रम-(प० सं० १६) रसिक-श्चिन्तयामास। यदहं युवराजोऽपि पितुरुपार्जिते राज्ये सुखमनुभवामीति न मम पौरुषम्। यतः—

पराश्रयेण जीवन्ति कातराः शिशवः स्त्रियः।
सिंहाः सत्पुरुषाश्चैव निजदर्प्पोपजीविनः॥

न वा निजभुजोपार्जितेन वित्तेन विना पितृभक्तिरपि सम्भवति। यदुक्तम्[1]—

अर्जितं भुज्यते यस्य यस्य चाराध्यते[2] यशः।
पितुर्बहुसुतस्यापि तेन पुत्रेण[3] पुत्रिता॥

ततः क्वापि गत्वा भुजदर्प्पेण पौरुषमार्ज्जयामीति परामृष्य स कुमारः कान्यकुब्जं नाम जनपदं जगाम। तत्र च जयचन्द्रनाम्नो राज्ञः काशीश्वरस्य सुभटपरिपाट्या संदर्शनं चकार। स राजा तं सत्कृत्य प्रियसहचरमकरोत्। कुमारस्तु तस्य राज्ञः सेवायां वर्त्तमानः क्रमक्रमेणाधिकसम्मान[4]पात्रमेकदा समादरे वैषम्य[5]मन्वभूत्। तथा हि—

आदरो दुर्लभो राज्ञां वस्तुन्यल्पगुणेऽपि च।
प्रगुणे च सुखप्राप्ते भवेन्नूनमनादरः॥

ततः स कुमारश्चिन्तयामास—

धनं तृष्णावतः प्राणा वह्नेः प्राणास्तथेन्धनम्।
कामुकस्य स्त्रियः प्राणा मानः प्राणा मनस्विनः॥

---

१. हस्तलेखे भ्रमवशाद् 'यदुक्तं' पाठः, पत्र सं० १६
२. पुरुषपरीक्षापाठः आकर्ण्यते, (झा०) पृ० १५, (सु०) पृ० १४
३. हस्तलेखे भ्रामकः पाठः 'सत्रिण', पत्रसंख्या १६
४. हस्तलेखे 'सन्मान' इति पाठः, पत्र संख्या १६
५. हस्तलेखे वर्त्तनी 'वैशम्य' इति, तत्रैव

ततो राजानमब्रवीत् । देव ! भवतः प्रभुधर्मं श्रुत्वाऽहमिहागतोऽस्मि । साम्प्रतमन्यत्र प्रयास्या-(प०सं० २०) मि । राजोवाच । कुमार ! किन्तु[1] तवोद्वेगकारणं येनान्यत्र यास्यसि ? मल्लदेव उवाच । देव ! भवतः समादरः क्रमक्रमेणापि शिथिलो भवितेत्याशङ्क्य साम्प्रतमितोऽन्यत्र गन्तुमिच्छामि । राजोवाच । कुतोऽवगतमिदम् ? मल्लदेव उवाच । यतः शौर्य्यमूलको[2] मादृशां समादरो भवति । शौर्य्यं[3] तु वाग्युद्धेन केवलं ख्यापयितुमशक्यम्[4] । अस्त्र युद्धं भवतो राज्ये न दृश्यते । राजोवाच । आसमुद्रकरग्राहिणो मम युद्धपरिपन्थी कोऽपि नास्ति । तत्केन समं युद्धं भविष्यति ? कुमार उवाच । देव ! राज्यफलं राज्ञो विजयसुखम् । विना युद्धेन कुतो विजयः ? कुतो वा तत्सुखम् ? यदि देवो मन्यते तदाऽहमितो गच्छामि । यस्य राज्यमहं गमिष्यामि स एव देवस्य परिपन्थी भविता । राजा सक्रोधमाह । रे कुमार ! कस्त्वं वराकः ? केन दर्प्पेणैवं भाषसे ? गच्छ तावद् यत्र गच्छसि । यत्र त्वं यास्यसि तत्रैवाऽहं प्रयाणं करिष्यामि । कुमार उवाच । अयमहं गच्छामि ।

ततः कुमारः चिक्कोर[5]नाम्नो नृपस्य राज्यं जगाम । तदग्रे तं तत्र गतं श्रुत्वा काशीश्वरस्तुरङ्गबलसहितः चिक्कोरं प्रति ययौ । कियतापि कालेन तं सन्निधानमागतं श्रुत्वा चिक्कोरः स्वमन्त्रिभिः (पत्र-संख्या २१) समं मन्त्रयामास यत्काशीश्वरो महाराजः[6] कोपाविष्टो मामुद्दिश्य समायाति तदिदानीं किं विधातुमुचितं भवति ? मन्त्रिण ऊचुः । देव ! भवतः[7] परिमितबलस्य तेन महाबलेन समं युद्धं नोचितं न वा तस्य महेश्वरस्य सन्धानक्षमं भवतो धनं विद्यते । तदिदानीं दुर्गाश्रयणमुचितम् । ततः पलायितुमुद्यतं चिक्कोरराजं दृष्ट्वा मल्लदेवोऽब्रवीत् । राजन् ! किमिति पलायितव्यं भवता ? भवन्तमुद्दिश्य काशीश्वरो न कदाप्यागतो न वाऽग्रेऽप्यागमिष्यति । यदि भवान् प्रत्येति तदा कथयामि तस्यागमननिमित्तम् । भवता न भेतव्यम् । चिक्कोर[8] उवाच । किं तन्निमित्तम् ? मल्लदेवः पूर्वकथां कथयामास ।

१. हस्तलेखे 'किन्न' इति पाठः, पत्र संख्या २०
२. हस्तलेखे 'सौर्य्यमूलको', पत्र संख्या २०
३. तत्रैव, सौर्य्यम्, पत्रसंख्या २०
४. पुरुषपरीक्षा पाठः 'ख्यापयितुं न शक्यते' (सु०) पृ० १५
   तद्वत् (भा) पृ० १६
५. पुरुषपरीक्षायां (पा०) तु चीत्कार इति, पृ० २२
६. हस्तलेखे अशुद्धः पाठः महाराजं, प० २१
७. हस्तलेखे 'भवता' इति अशुद्ध पाठः, प० २१
८. हस्तलेखे भ्रामकः पाठः 'वक्कोल इति', प० ३१

चिक्कोर[२] उवाच । तर्हि किमुचितम् ? मल्लदेव उवाच । स चेत् केवलं मामेवोद्दिश्य समायाति तदा भवता न पलायितव्यम् । किञ्च मयैकेन समं तत्सुभटानां सङ्ग्रामकौतूहलं द्रष्टव्यम् । चिक्कोर[२] उवाच । कुमार ! तेन महाराजेनानन्तबलेन सममेकाकिनस्तव न समुचितं युद्धमिति । (नीति-) विरुद्धमेतत् । कुमार उवाच । शूराः[१] कर्मणि परामर्शं न सहन्ते । चिक्कोर[२] उवाच ।[३]तर्ह्य विमृश्यकारिणां विपदन्तः प्रारम्भः । कुमारो[४] ब्रूते । अलममुना[५] विवादेन ।

यत्करिष्ये स्वयं कर्म भोक्ष्ये (प० सं० २२) तस्य स्वयं फलम् ।
स्वापराधविपन्नानां विपत्तिः[६] केन शोच्यते ॥

चिक्कोर[२] उवाच ।

युक्तं तुल्यबले युद्धं यत्रास्ति जयसंशयः ।
प्रबलेऽरिबले वह्नौ के पतन्ति पतङ्गवत् ॥

कुमार उवाच ।

[७]यशस्विना स्वेच्छया चेन्मृत्युरङ्गीकृतो रणे ।
तस्यापरं भयस्थानं किं रिपौ प्रबलादपि ॥

किञ्च—

यशः कामनया पुंसां रणे मरणमिच्छताम् ।
परिपन्थिमहत्त्वेन महत्त्वं यशसो भवेत् ॥

अपि च—

प्राणत्राणाय सङ्ग्रामात् पलायन्तेऽपि ये नराः ।
मृत्युरावश्यकस्तेषां कार्पण्यमतिरिच्यते[८] ॥

---

१. हस्तलेखे सूरा इति पाठः, प० सं० २१
२. हस्तलेखे चाक्कोल इतिपाठः, प० २१
३. हस्तलेखे 'तर्हि विमृष्यकारिणा' मिति पाठः, प० २१
४. कुमार निर्विभक्तिकं पदं हस्तलेखे, तत्रैव पत्रसंख्या २१
५. हस्तलेखे भ्रामकः पाठः 'अलममुरनाविवादेन' प० सं० २१
६. हस्तलेखे निर्विभक्तिकं पदं 'विपत्ति' इति, प० सं० २२
७. पुरुषपरीक्षायां तु निम्नपाठः
यशश्चिचीषया येन मृत्युरङ्गीकृतो रणे ।
(भा०)पृ० १७; (सु०) पृ० १७
८. हस्तलेखे पाठः 'कार्पण्यमितिरिच्यते', प० सं० २२

चिक्कोर उवाच । कुमार ! भवान् महावीरः, काशीश्वरो महाराजस्ततो युवयोः [1]सङ्ग्रामसंघर्षोऽस्मदादिभिः श्रोतुमपि न शक्यते किं पुनर्द्रष्टुम् । कुमार उवाच । यदि भवतो युद्धस्य दर्शनमप्यनभिमतं तदा भवान् गच्छतु । क्वाऽपि यमपुरुषाऽनिरीक्ष्यमाणं स्थानं गत्वा भवत्वमरः । मया च योद्धव्यमेव । परं ततो मह्यं हस्तिनमेकं दत्वा गच्छतु भवान् । मया तु शून्यस्याऽपि भवतो नगरस्यावेक्षा कर्त्तव्या । चिक्कोरः कुमारस्य वचनेन तथा कृत्वा पलायितः ।

तदग्रिमप्रभाते भेरीभाङ्कारैर्गगनाभोगं पूरयन् कूर्मममर्मस्पृशा तुरगखुरप्रहारेण धरणिमण्डलं चपलयन् महाराजो जयचं-(प० २३)द्रस्तन्नगरसन्निधानमाजगाम । मल्लदेवस्तमागतं ज्ञात्वा कृतसन्नाहः परिगृहीतास्त्रो गजारूढः पुरो गत्वा राजानं ददर्श । राजोवाच । कस्त्वं रे कुञ्जरारूढ ! सन्धनार्थी चिक्कोरस्य दूतो युद्धार्थी मल्लदेवोऽसि वा ? मल्लदेव उवाच । राजन् ! नाऽहं दूतो न वा सन्धनार्थी । किन्तु तव प्रतिमल्लो युद्धार्थी मल्लदेवोऽस्मि । राजा विहस्याह । भद्र ! मम प्रतिमल्लता सिद्धैव । त्वमिदानीं समागत्यानुसर माम् । मल्लदेव उवाच । त्वमेव किन्न मामनुसरसि ? सम्प्रति त्वं तुरगारूढोऽसि, अहं गजारूढोऽस्मि । त्वमप्यस्त्राणि धारयसि, अहमप्यस्त्राणि धारयामि । तदिदानीं प्रहारसमये कुतो वचनवैचित्र्याणामवकाशः ? राजा साश्चर्यं सैनिकान् प्रत्याह । रे सैनिकाः । जीवितं मल्लदेवं धृत्वा मे दत्त । मल्लदेवः सर्वान् प्रत्याह ।

दिक्पालाः कृतसाक्षिणश्च मुनयः सिद्धाः सुराः खेचराः
सर्वे पश्यत कौतुकं नृपिशिते रक्षोगणास्तृप्यत ।
मोदं चाप्सरसः प्रयात सहसा वीरानुरागोत्सुका
एकः साहसमातनोति बहुभिः श्रीमल्लदेवो रणे ॥

ततो निरोद्धुकामान् परितो विपक्षसुभटान् मल्लदेवो नाराचचक्रैर्निजघान । तेन च निहतान् निजप्रियसुभटान् भूमौ पतितान् दृष्ट्वा जयचन्द्रः सेनामादिदेश—रे रे वीरपुरुषाः ! (प० सं० २४) यद्येनं मुमूर्षुमवरोद्धुं न शक्नुथ, तदा शरासारैः स्नपयत । ततस्तां प्रभोराज्ञामासाद्य सुभटास्तं मल्लदेवं युगपदेव ज्यापातनिर्घोषदारुणैः शरासारैरभ्यषिञ्चन् । शरशल्लितश्चासौ कुञ्जराद् भूमौ पपात । तत्समये[2] कवेः कस्यापि श्लोकः—

अशीतिवर्षदेशीयश्चिक्कोरः[3] प्रपलायितः ।
षोडशाब्दस्तु कार्णाटः सम्मुखः पतितो रणे ॥

---

१. हस्तलेखे 'संग्रामसंहर्षो' इतिपाठः, प० सं० २२

२. हस्तलेखे 'तत्समय' इति पाठः, पत्रसंख्या २४

३. तत्रैव, 'चिक्कोर' इति निर्विभक्तिकं पदम्, प० २४

तञ्च प्रचुरनाराचभिन्नशरीरं सङ्ग्रामभूमौ पतितं दृष्ट्वा राजोवाच। हे सात्त्विकमूर्धन्य ! कार्णाटकुलप्रतिष्ठाबीजाङ्कुर ! जीविष्यसि ? मल्लदेव उवाच। कच्चिदावयोः केन जितं[1] युद्धम् ? राजोवाच। भवता जितम्। (मल्लदेव उवाच।) कथमिदं निर्धारणीयम् ? राजोवाच।

अस्माभिः कुलसङ्ग्रामो यदेको बहुभिर्हतः।
जिगीषति तथाप्यस्मान् कथं न विजयी भवान्॥

ततस्तेन राज्ञः प्रशंसावचनेन पुलकितबाहुमूलो मल्लदेवोऽब्रवीत्। देव ! जीविष्यामीति। तदनन्तरं [2]तच्छौर्य्यपरितुष्टेन जयचन्द्रेण राज्ञा स कुमारः शरानुद्धृत्य स्वस्थानं नीतः पुत्रप्रेम्णा परिपाल्य क्षतेषु निर्वाणेषु प्रतिपूज्य प्रतिनिधीकृतश्च। तथाहि—

तच्छौर्यं मल्लदेवस्य (स) विवेकश्च भूपतेः।
भूते भाविनि वा काले न जातो न जनिष्यते॥
इदानीं हे महिपाल गद्यपद्येन सिंहराज-
सारात् सारं समुद्धृत्वा[3] कथयामि तवाग्रतः।
युद्धवीरकथां[4] श्रुत्वा बलदेवो महा-(प० २५)न् पुनः।
प्रयागक्षेत्रं विहाय काशीं गन्तुमुपचक्रमे[5]॥

**इति विद्यापतिकविविरचिते भूपरिक्रमणे महाप्रयागविवरणे युद्धवीरकथा समाप्ता।**

---

१. तत्रैव 'जित' इति निर्विभक्तिकपदस्य पाठः, प० २४
२. हस्तलेखे 'तत्सौर्य्य' इति अशुद्धः पाठः, प० २४
३. हस्तलेखे आर्ष-प्रयोग इति, प० २४
४. तत्रैव, निर्विभक्तिकं पदं 'युद्धवीरकथा' इति, प० २४
५. तत्रैव, भ्रामकः पाठः उपक्रमे, प० संख्या २५

चतुर्थम्

## काशीक्षेत्रविवरणम्

वेणीदेशं परित्यज्य गङ्गामुत्तीर्य्य यत्नतः ।
प्रतिष्ठानपुरवरं जगाम मुनिना सह ॥

[१]चन्द्रवंशराजधानीं त्यक्त्वा च मुषली हली ।
नाकदेशं च गतवान् कामचक्रस्य पश्चिमे ॥[२]

सुकर्म्मभूमिकां त्यक्त्वा बाणयोजनसम्मिताम् ।[३]
कैवल्यपृथिवीं प्राप्तो हली च मुनिना सह ॥

चतुःक्षेत्रा च यत्रैव चतुर्मुक्तिप्रदायिनी ।
विशेशो[४] यत्र जागर्त्ति भैरवेन सहान्वितः ॥

काशीक्षेत्रं प्रथमतः पञ्चक्रोशान्विता मही ।
यत्र देवा हि तिष्ठन्ति वेष्टनेन मुदान्विता ॥

वरणासिसरितोर्मध्ये क्रोशत्रयमिता मही ।
वाराणसीति[५] विख्याता प्राणिनां सायुज्यकारिणी ॥

तृतीयमविमुक्तं च क्षेत्रं क्रोशद्वयान्वितम् ।
सारूप्यमुक्तिदं नित्यं (मुनिषु प्राणिषु द्रुतम्)[६] ॥

---

१. हस्तलेखे 'चन्द्रवंशे' इति पाठः, पत्रसंख्या २५
२. हस्तलेखे अशुद्ध पाठः पश्चिमो, प० २५
३. तत्रैव पाठाशुद्धिः 'सम्मिता', प० २५
४. 'विशेश' इति पाठोऽपि ग्राह्यः शषयोरभेदस्थापनात् ।
५. हस्तलेखस्य पाठः 'वाराणसी विख्याता', पत्रसंख्या २५
६. मसीलेपादपाठ्यम् । पाठ सङ्गत्यर्थं मूलपाठस्य पुनरावर्त्तनम् ।

चतुर्थमन्तगृहक्षेत्रं शिवगेहञ्च तत्स्मृतम् ।
क्रोशमात्रं परिमितं (ययौ ताञ्च शुभां पुरीम्)[१] ॥

त्रिकालज्ञेन सहितो बलदेवो महीपते ।
द्वादशरात्रमुवासैव काशीक्षेत्रे समाजग्मुः ॥

बलदेवस्य दर्शनाद्[२] द्वादशग्रामवासिनः ।
मध्यमेश्वरं समारभ्य सूत्रपाणेः प्रदक्षिणम् ॥

पञ्चक्रोशस्य परिक्रमं[३] कृतवान् कामपालकः ।
कर्दमेश्वरं प्रथ-(१०२६) मं जगाम मुनिना सह ॥

(अथान्तरे) हड्डिपालदेशमध्ये लाक्षागेहस्य भूमिप ।
सुरधुनीतीरवासी च पलाशकाननान्तरे ।
यत्र पुरा सुतपसेनः वन्दनार्थे सदलैः सह ॥

बलदेवस्य निकटे ह्यागतः कातरान्वितः ।
धनानि हलिने दत्वा गतवान् जतुभूमिकम् ॥

आङ्गिलग्रामद्विजाः सर्वे प्राजग्मुस्ते बलस्य च ।
दिव्यज्ञानं च तेभ्यो हि दत्तवान् नृपसिंहकः ॥

रामेश्वरं कुसुमपुरं गत्वा हि बलदेवकः ।
करेठग्रामवासी(च) नृपो हि यदुनन्दनः ॥

अतुलमाधुरीं द्रष्टुं कुन्देन्दुधवलां नृप ।
बालियग्रामात् समागत्य दुर्गवंशसमुद्भवः ॥

पामरो हि[४] महीपालः कापिलतीर्थे समागतः ।
श्रीकृष्णाग्रजं दृष्ट्वा नत्वा चैव पुनः पुनः ॥

---

१. मसीलोपादपाठ्यो मूललेखः ।
२. हस्तलेखे भ्रममूलकः पाठः दर्शनार्थद्, प० २५
३. हस्तलेखे परिक्राममिति पाठः, प० २५
४. हस्तलेखे 'ही' इतिपाठः ; पत्रसंख्या २६

बहुरत्नं बलदेवाय दत्तवान् मुनिसन्निधौ ।
करिपातशिखरगिरिपादाश्च दशभूपाः प्राप्ताः[१] ॥

अथ च—

वरणायाः[२] समीपे च कुलस्तम्भस्य सन्निधौ ।
मिलित्वा पूजितवन्तः सर्वे दृष्ट-(रूप)[३] विमोहिताः ॥

यक्षिणीदेशवासिनश्च प्रायो हि शक्तिसेवकाः ।
द्विजबन्धुभूरिशाश्च ह्यागता दक्षदेशतः ॥

अष्टग्रामाद् गण्डाहग्रामाद् भद्रग्रामाच्च भूपतिः ।
पूजयामास मतिमान् गोपालमण्डलाधिपः ॥

विसृज्य[४] सर्वान् भूपालान् नानाधनं प्रगृह्य च ।
वरणाया-(प० २७) स्तटे लिङ्गं स्थापयामास यत्नतः ॥

आदिकेशवसन्निधाने निशाभागे कामपालं[५] प्रति मुनिः काशीं प्रशंस्य कथां[६] सत्यवीरस्य भूमिप तथा च अक्रूरकथाप्रसङ्गेन महीपते चौरादीनां कथां तत्राश्रावयत्[७] स महामुनिः ।

बृहद्ब्रह्मपुराणाच्च ह्युद्धृत्य विद्यापतिः कविः ।
काव्यरीत्या स्म प्रोवाच देवसिंहाय भूभृते ॥

---

१. तत्रैव, 'प्र' इति पाठांशः ; प० २६
२. हस्तलेखे वरुणायाः इति पाठः ; प० २६
३. हस्तलेखे 'रूप' इति पाठाधिक्यम्, प० २६
४. हस्तलेखे विसर्ज्य इति, प० २६
५. हस्तलेखे निर्विभक्तिकं पदं कामपाल इति, पत्रसंख्या २७
६. तत्रैव 'कथा' इति हस्तलेखे, प० २७
७. हस्तलेखे 'तत्रश्रावयत्' इति पाठः, प० २७

# अथ सत्यवीरकथा

कलौ कामादिभिर्युक्तो मानवोऽनृतवागपि ।
सत्यवीरकथां श्रुत्वा सर्वपापैः प्रमुच्यते ॥

पुरा हस्तिनापुरनाम्नि नगरे महम्मदनामा यवनेश्वरो बभूव । तस्मिन्ना-समुद्रं धरणीवलयं शासति तदुत्कर्षासहिष्णुः काफरराजस्तमभियोक्तुं[1] सकलबल-सहितस्तत्राजगाम । यवनेश्वरस्तु तमायान्तं ज्ञात्वा काम्बोजैरश्वैस्तुरुष्कैश्चाश्ववारै-र्बहुभिर्लक्षैः परिवारितः पुराद्[2] बहिर्भूय तेन समं सङ्ग्राममङ्गीचकार । तदुभय-बलसमारब्धे सङ्ग्रामे बलीयसा काफरराजसैन्येन हन्यमाना यवनयोधा रणात् पराङ्मुखा बभूवुः ।

ततस्तादृशं सिंहभयार्दितमिव करियूथं पलायमानं निजबलं दृष्ट्वा यवनेश्वर उवाच । रे रे मम सैन्यसुभटा राजानो राजपुत्राश्च ! युष्माकं मध्ये कोऽपि तथा नास्ति य इदानीं रिपुभयभग्नं मम सैन्यं स्वेन बाहुबलेन क्षणमवलम्बते । तच्च (प० सं० २८) यवनराजवचनं श्रुत्वा कार्णाटकुलसम्भवो[3] नरसिंहनामा चौहान-कुलसम्भवश्चाचिकनामा च राजकुमारौ प्रोचतुः । राजन् ! क इदानीं निम्नाऽ-भिमुखं पततः पाथस[4] इव रिपुत्रासभग्नस्य भवद्बलस्य परित्राता भवतु ! यदि क्षणं परावृत्य भवानवलोकते तदाऽऽवामेव भवतोऽरिपक्षं खड्गधाराप्रहार-परिचितशिरस्कं करवावः[5] । यवनेश्वर उवाच । साधु कुमारौ ! साधु ! युवाभ्यामन्यः क एतादृशं व्यवस्यति ?

ततो नरसिंहदेवः पुलकालङ्कृतबाहुमूलः कुलिशपातानुकारिणा कशाघातेन तुरगं त्वरयित्वा परावृत्याऽतर्कित एव काफरबलं प्रविवेश । प्रविश्य च जितकाशिनमायान्तं सितातपत्रपरिचितं काफरराजं शल्येन हृदि हतवान् । काफरराजस्तु गतप्राणो[6] भूमौ निपपात । चाचिकदेवेन च भूमौ पतितस्य तस्य

---

१. पु० परीक्षा (पा०) अभियोद्धुम्, पृ० ३०,
(सु०) सम्पादिते पुरुषपरीक्षाग्रन्थे भूपरिक्रमणवत्पाठः, पृ० २०

२. हस्तलेखे भ्रान्त्या 'पुत्राद्' इति पाठः

३. हस्तलेखे 'कार्णाटकुलसम्भवौ' भ्रामकः पाठः, पृ० २८

४. तत्रैव, भ्रामकः पाठः पथासमुदस्य, पत्रसंख्या २८

५. हस्तलेखे करवाच इति, पत्रसंख्या २८

६. हस्तलेखे 'गतः प्राणो' इति पाठः, पत्रसंख्या २८

शिरश्छित्वा यवनराजस्य पुरो नीतम्। यवनेश्वर उवाच। कस्येदं शिरः? चाचिकः कथयति। काफरराजस्य। यवनेश्वर उवाच। केनाऽसौ हतः? चाचिको ब्रूते। राजन्! पराक्रमतुलितपार्थेन नरसिंहदेवेन हतः। तत्पश्चाद्गामिना मया शिरश्छिन्नम्। यवनेश्वरः पृच्छति। नरसिंहदेवः कुत्र? चाचिको ब्रूते। काफरराजसन्निधानवर्त्तिभिः स्वा-(पत्रसंख्या २९) मिवधामर्षितैर्माङ्गोलसुभटै-र्बहुभिरेको हन्यमानो मया दृष्टः। क्व गतः क्वेदानीमस्ति वा तावन्न ज्ञायते।

ततो यवनराजः परसैन्यं हतनायकं पलायमानं दृष्ट्वा परमसानन्दो बभूव। पुरुषांस्तदनुगामिनः स्वसैनिकान् प्रत्याह—रे रे मम सैनिकाः! पलायमानान् परसुभ-टान् किं निहथ?[1] सम्प्रति मम राज्यरक्षितारं काफरराजकृतान्तं नररूपिणं सिंहमेव नरसिंहदेवं मे विज्ञापयत।

तदनन्तरमेकत्र सङ्ग्रामप्रदेशे बहुतरनाराचभिन्नशरीरं वहद्रुधिरधारासहस्रं पुष्पितं किंशुकमिव वेदनामूर्च्छितं नरसिंहदेवं यवनराजो ददर्श। तुरङ्गादवतीर्य्य बभाषे। हे नरसिंहदेव! जीविष्यसि? नरसिंहदेव उवाच। राजन्! मया यत्कृतं तदवगतं भवता? यवनेश्वर उवाच। ज्ञातं मया। कथितं चाचिकदेवेन। त्वया मम शत्रुर्हतः। नरसिंहदेव उवाच। तर्हि जीविष्यामि। यतः—

स्वीकृतं दुष्करं कर्म मया यस्य हितेच्छया।
तेन विज्ञायमानो मे फलितः श्रमपादपः॥

ततस्तस्य शरीरादापुङ्खनिमग्नान् नाराचानुद्धृत्य यवनराजस्तं कुमारं नानाभेषज-प्रयोगेण नियमेन च स्वल्पैरेव दिवसैर्निर्वाणक्षतमचीकरत्। तदनन्तरं सहस्रसंख्यै-स्तुरङ्गैर्लक्षसंख्यैः काञ्चनैश्छत्रचामरादिभिश्च तं पूजयि-(पत्रसंख्या ३०) तुमुपचक्रमे[2]।

प्रसादावसरे नरसिंहदेव उवाच। राजन्! राजपुत्राणां युद्धं स्वाभाविक एव धर्मः। तत् किमद्भुतं मया कृतं यदियं मम पूजा क्रियते? यदि पूजैव[3] कर्त्तव्या चाचिकदेवस्य क्रियताम् येन रिपुशिरोऽप्यानीय सत्यरक्षानुरोधेन भवतः पुरस्तान्मम यशः प्रकाशितं, स्वपौरुषं न ख्यातम्[4]। अन्यथा तेन नीयमानं मारणचिह्नं रिपुशिरो दृष्ट्वा को वाऽध्यगमिष्यत् यन्मया मारितो रिपुरिति। तदयमेव प्रथमं पूज्यताम्।

१. हस्तलेखे निहत इति पाठः, पत्रसंख्या २९
२. हस्तलेखे 'पूजयेतुम्' इति अशुद्धः पाठः, पत्रसंख्या २९
३. हस्तलेखे 'पूजव' इति, पत्रसंख्या ३०
४. हस्तलेखे ख्यापितमिति पाठः, पत्रसंख्या ३०

चाचिकदेव उवाच । कुमार नरसिंहदेव ! मा मैवं ब्रूहि । कथमहं तव पराक्रम-फलमासाद्य परोच्छिष्टजीवी (भवि-)ष्यामि । नरसिंहदेव उवाच । साधु सत्यवीर ! साधु !

अनेन तव सत्येन सर्वमेव विवेचितम्[1] ।
महेच्छोऽसि विदग्धोसि सतीपुत्रोऽसि चाचिक ! ।।

ततस्तयोः कुमारयोः परस्परालापमाकर्णयता समुपजातपरितोषेन यवनराजेन द्वावपि कुमारौ तुल्यमेव सत्कृतौ ।

**इति सत्यवीरकथा समाप्ता**

---

१. पुरुषपरीक्षायां (पा०) 'सर्वमेवोचितं तव' पृष्ठसंख्या ३४
पु० प० (भा०, सु०)-भूपरिक्रमणवदेव पाठः ।

# प्रत्युदाहरणकथा

तद्यथा—

विवेकेन विना चौरो विना शौर्य्येण[1] कातरः।
अलसस्तु विनोत्साहं लोके मर्त्योऽभिजायते ॥

तत्र प्रथमं चौरकथा[2]।

दयादानादिभिस्त्यक्तो विवेकप्रभवैस्तु यः।
शौर्यं[1] चाऽपि भवेत्तस्य कुवृत्तेरेव कारणम् ॥

तथा—

विवेकेन विना शूरः पापमाचरति ध्रुवम्।
पुण्यकर्मसमर्थोऽपि (प० सं० ३१) यथा चौरः सरीसृपः ॥

आसीदुज्जयिन्यां पुरि[3] विक्रमादित्यो नाम राजा। स चैकदा चौरव्यापार-दर्शनकौतूहली रङ्कवेषं परिगृह्य निजनगर एव देवायतनसन्निधाने तस्थौ। तथा च तमस्विन्यां रात्रौ निशाभागे चत्वारश्चौराः समागत्य मन्त्रयामासुः। यदिदं गृहादानीतमन्नमत्र भुक्त्वा प्रवृद्धबलाः पुरं प्रविशामः। विक्रमादित्य उवाच। तदुच्छिष्टं मह्यं दास्यथ ? चौराः सवितर्कमाहुः। अये ! कस्त्वम् ? राजोवाच। रङ्कोऽहं क्षुधाकुलितो गन्तुमसमर्थः पतितस्तिष्ठामि। चौरा ऊचुः। हुँ। नगरपथ-परिशोधसमये दिवाप्यस्माभिर्दृष्ट एवायमत्र। रे रङ्क ! कथमिदानीमप्यत्रैव तिष्ठसि ? राजोवाच। देवयात्राप्रवृत्तलोकमुद्दिश्य भिक्षार्थमहमत्रागतोऽस्मि। कुत्रान्यत्र यास्यामि ? भिक्षामनासाद्य बुभुक्षितः पतितस्तिष्ठामि। चौरा ऊचुः। यदि तुभ्यमुच्छिष्टमन्नं दास्यामस्तदा किन्नः प्रयोजनं करिष्यसि ? राजोवाच। तुङ्गं तुङ्गं धनिकगृहं दर्शयिष्यामि। चोरितवस्तुभारं च वोढाऽस्मि। चौरा ऊचुः। ततस्तिष्ठ। ग्रहीष्यस्युच्छिष्टमन्नम्। ततः कृतभोजनैश्चौरैर्दीयमानमुच्छिष्टं कर्परे कृत्वा वेतालेन[4] हारयित्वा च राजोवाच। अद्याऽहं कृतार्थोस्मि युष्मा-(पत्रसंख्या ३२) कं प्रसादेन।

---

१. हस्तलेखे तु 'सौर्य्यं' इति पाठः, पत्रसंख्या ३०

२. तत्रैव 'चौरकाथा' इति, पत्रसंख्या ३०

३. हस्तलेखे प्रमादवशात् 'उज्जयनिनामरिपु' इति पाठः, पत्रसंख्या ३१

४. हस्तलेखे 'वेताले' इति पाठः, पत्रसंख्या ३१

ततस्तेषां मध्ये सरीसृपनामा मुख्यचौरोऽब्रवीत् । यदहं शाकुनिकशास्त्रे कृतश्रमोऽस्मि ततः शृगालाः[1] किं वदन्तीति जानामि[2] । इतर ऊचुः । जानीहि । सरीसृप उवाच । सखायः ! श्रूयताम् युष्माभिः । [1]शृगालो वदति—युष्माकं मध्ये चत्वारश्चौरा एको राजाऽस्तीति । त ऊचुः । वयं परस्परं चत्वारोपि चिरपरिचिता एवं । पञ्चमोऽसौ रङ्को दिवाऽपि दृष्टोऽत्राप्युच्छिष्टग्राही दृश्यते । ततः कुतोऽत्र राजशङ्का ? सरीसृप उवाच । शृगालभाषितं मिथ्या न भवति । त ऊचुः । प्रत्यक्षबाधितेऽर्थे का दुःशङ्केति[3] ।

ततो वाकोवाक्यं[4] कृत्वा पञ्चापि पुरुषाः पुरं (प्रविविशुः) । पुरपतिगृहे सन्धिं कृत्वा बहूनि धनानि चोरयित्वा नगराद् बहिरागत्य गर्त्ते चिक्षिपुः । [5]चौराश्चत्वा-रोऽपि सरसि कृतस्नानाः पुनर्नगरमागत्य मदिरागृहं विविशुः । राजा च स्वकीय-मागारमाजगाम ।

तदनन्तरमास्थानमण्डपे सर्वावसरं कृत्वा सिंहासनोपविष्टो दण्डनायकमाहूयादिदेश । राजोवाच । अये परलक्षक[6] ! त्वं दुर्गपालोऽसि । किमपि रात्रिचरित्रं न जानासि ? गच्छ तावदिदानीं चत्वारश्चौराः पिचिण्डिलनाम्नः शौण्डिकस्य गृहे मद्यं पिवन्तः सन्ति । तान् शृङ्खलाबद्धान् कृत्वा सत्वरमानय । दण्डनायकः प्र-(प० सं० ३३)णम्य गत्वा तथा कृतवान् ।

राजोवाच । रे रे मम सखायश्चौराः ! परिचिनुथ माम् ? सरीसृप उवाच । देव ! मया तदैव परिचितो[7] भवान् । किन्त्वमी सखायः परमदुष्टाः शृगालस्यापि कथितमतथ्यं निर्द्धारितवन्तः । किमहं करोमि ? सखिवचनैः प्रमत्तोऽस्मि । तथाहि—

एक एव हि नीतिज्ञः कर्म कृत्वा सुखी भवेत् ।
बहूनपेक्षमाणस्य स्थानात् प्रच्यवते मतिः ॥

१. हस्तलेखे 'शृगाला' इति, पत्रसंख्या ३२
२. तत्रैव, 'जानाति' इति, पत्रसंख्या ३२
३. हस्तलेखे 'दुःसंकेति'; प० सं० ३२
४. पुरुषपरीक्षायां (पा०) वाग्वादम् पृ० ४६ ; (सु० झा०) भूपरिक्रमणपाठः, पृ० २४, पृ० २५
५. हस्तलेखे चौराःश्चत्वारोपि, प० ३२
६. हस्तलेखे परलक्षकस्त्वम् इति, प० ३२
७. हस्तलेखे 'परिचितौ', प० ३३

अपि च—

ज्ञातसारोऽपि शूरोऽपि पण्डितोपि क्रियापरः[1] ।
निमज्जति महाराज ! बहूनां मतिकर्दमे ॥

राजोवाच । रे रे चौराः । परोपदेशपरिग्रहजं निजप्रमादं शोचथ । स्वज्ञानदोषजकथां न शोचथ ! चौरा ऊचुः । कोऽस्माकं ज्ञानदोषजन्मा प्रमादः ? राजोवाच । स्फुट एवायं युष्माकं प्रमादोऽस्ति[2] यद्वीरवृत्तिसमर्था अपि चौरवृत्तिमाश्रयथ । तथा हि—

येनान्ये प्रभवन्ति भूमिवलये नन्दन्ति लब्धश्रियः
पुण्यं पण्डितमण्डलीषु परितः शुद्धं लभन्ते यशः ।
तेनैव क्षतिसाधकेन महता शौर्येण निन्दास्पदम्
यूयं गच्छथ चौरतां भुवि कथं हा दुस्त्यजा दुर्मतिः ॥

चौरा ऊचुः । देव ! दुर्मतिरेवात्र कारणम् । राजोवाच । यद्येवं स्वीकुरुथ तदा किं न त्यजथ तां दुर्मतिम् ? चौरा ऊचुः । देव ! दरिद्रता तत्परित्यागप्रतिबन्धका[3] ।

यतः—

पापे नियोजयति भोजयतीह[4] दुःखम्
स्तेयं च पा-(प०३४)रयति शाठ्यमुत्पादयन्ती ।[5]
दीनं च वाचयति याचयते च हीनं
किं नैव कारयति हन्त ! दरिद्रता नः ॥

राजोवाच । रे चौराः युष्माकं दरिद्रता तदैव गता यदा मया सह सखिभावो जातः । सखिभावस्तु तुल्यप्रतियोगिक एव सम्भाव्यते । कथं युष्माकं सख्यमालम्ब्य[6] क्षणमहं चौरतां गतोस्मि ? कथं मम सख्येन यूयं राजतां न यास्यथ ? तदग्रेऽपि परिहरिष्यथ दुर्मतिमिमाम् ? चौरा ऊचुः । कथं न त्यक्ष्यामः ! राजोवाच । इदानीं शृङ्खलाबद्धा यूयं किं न स्वीकुरुथ ?

---

१. पुरुषपरीक्षायां क्रियोद्धुरः; (मु०) २५
२. हस्तलेखे 'अस्ती', प० ३३
३. हस्तलेखे 'प्रविबन्धका' इति पाठः, प० ३३
४. मु० प० (पा०)भोजयतीति दुःखम्, पृ० ५२
५. हस्तलेखे शाठ्यमुत्पादयान्तीति पाठः; प० ३४
६. हस्तलेखे सख्यमानस्येति भ्रामकः पाठः, प० ३४

तथा हि—

आक्रमे पालिसां दृष्ट्वा जिह्वा ललितया गिरा ।[1]
दूषणं किं न मुञ्चन्ति किं न गृह्णन्ति वा गुणम् ॥

अथवा पुनर्यदि कुवृत्तिं कुरुथ तदा पुनरिमामेव दशां प्राप्स्यथेत्यभिधाय पुरपतिधनं पुरपतेर्दापयित्वा स राजा चौरान् मुमोच । तेषां मध्ये सरीसृपनामानं मुख्यचौरं शाल्मलिपुरे राजानं चकार । तदितरान् चौरान् काञ्चनैरदरिद्रीकृत्य करुणया कुतूहलेन (च) प्रस्थापयामास ।

ततः कियतापि कालेन तेन राज्ञा चिन्तितम् यत् सरीसृपो मया राज्ञा कृतः । स चौरो राजपदवीं प्राप्य किमिदानीमाचरतीति निरूपणीयं भवति । यतः—

दुर्बलस्य गुरुर्भावो[2] दुष्टाग्नेर्गुरु भोजनम् ।
राज्यं गुरु[3] च दुर्बुद्धेः परिणामसुखं कुतः ॥

ततः स राजा सुचेतनं[4] नाम (प० सं० ३५) चारपुरुषं प्राप्तराज्यस्य चौरस्य चरित्रनिरूपणाय प्रस्थापयामास । चरस्तु तत्र गत्वाऽधिगतसर्ववृत्तान्तः पुनराजगाम । राजोवाच । सुचेतन ! कथय वार्त्ताम् । चर उवाच । देव ! भवतः पथ्यमपथ्यं वेति नाऽहं विचारयामि । तथ्यं कथयामि । अलीकभाषणं नोचितं चारपुरुषस्य । तथा हि—

काणेन[5] चक्षुषा जन्तुर्यथा किञ्चिन्न पश्यति ।
न पश्यति तथा राजा चरेणाऽनृतभाषिणा ॥

तदहं तथा दृष्टं तच्चरितं पद्यैरुपवर्णयामि । शृणोतु देवः ।

एकस्य[6] कृपया तस्मै राज्यं दत्वा दुरात्मने ।
पराऽनिष्टप्रवीणाय बहूनां विपदः कृताः ॥

---

१. पु० प० (पा०) आक्रमे पतिता दुष्टा जिह्वाग्रगतया गिरा इति पाठः, पृ० ५३
पु० प० (सु०) आक्रमे पतिता दुष्टा जिह्वाग्रगतया गिरा, पृ० २६
पु० प० (भा०) जिह्वाग्रगतया इति पाठः, पृ० २७
२. पु० प० (सु०) 'भारो' इति, पृ० २७; तद्वत् (भा०), पृ० २८
३. हस्तलेखे 'गुरुमि' ति अशुद्धः पाठः, प० सं० ३४
४. हस्तलेखे 'सुचिन्तनं' नाम इति पाठः, प० सं० ३४
५. हस्तलेखे कालेन, प० ३५
६. पु० प० (भा, सु०) एकस्मै, पृ० २७, २८

स दुर्वृत्तः पुराऽप्यासीत् समर्थो भवता कृतः ।
दुर्वृत्तश्च समर्थश्च किं नाम न करिष्यति ।।

कृपयान्वितचित्तेन[1] भवताऽपि महात्मना ।
दुर्गतिः खण्डिता तस्य प्रकृतिस्तु न खण्डिता ।।

यशः पुण्यं सुखं चेति त्रयं राज्यतरोः फलम् ।
तत्र नाप्नुवतस्तस्य किं राज्येन प्रयोजनम् ।।

साधूनां हरते द्रव्यं हन्ति मानं मनस्विनाम् ।
निजसौकर्य्यलोभेन किमकृत्यं दुरात्मनः ।।

रमते[2] च परस्त्रीभिः स्थिरं जानाति जीवितम् ।
पश्यन्नपि च कामास्त्रं यमस्यास्त्रं न पश्यति ।।

नावसीदति पापेन लज्जते नापकर्मणा ।
न तृप्यति परस्वेन घस्मरस्य कुतो घृणा ।।

ब्रवीति चौरवृत्त्याऽहं गतोऽस्मि राजतां यथा ।
त्यजामि केन दो-(प० ३६) षेण तामात्महितकारिणीम् ।।

राज्यं भवति दुर्वृत्तैरित्यर्थमिति तत्परः ।
स्वयं पश्चाश्च दृष्टान्तो दुर्वृत्तिं नैव मुञ्चति ।।

अपि द्वीपघटाकीर्णमपि रामाशतान्वितम्[3] ।
विवेकेन विना राज्यं शोभते न दुरात्मनः ।।

शिवस्वमपि नाग्राह्य[4] नावध्या ब्राह्मणा अपि ।
दस्यौ शासति भूभागं मुनेरपि न मान्यता ।।

---

१. पु० प० (झा० सु०) कृपास्तिमितचित्तेन, पृ०, २८
२. हस्तलेखे 'रमन्ते' इति पाठाशुद्धिः, प० ३५
३. पु० प० (सु० झा०) वामाशतान्वितम्, पृ०२८, २९
४. हस्तलेखे 'नग्राह्यमिति' भ्रामकः पाठः पत्र, ३६

स्वयं कृतानि कर्माणि[1] स्वयमेव विलुम्पति ।
तृष्णोपप्लुतचित्तानां स्थैर्यमात्मकृते कुतः ।।

राजोवाच । सुचेतन ! एभिः पद्यैस्तस्य दुरात्मनश्चरितं स्वस्थोहं[2] वृत्तोऽस्मि । मन्ये ममापि दुःकीर्तिरियम् । चर उवाच । देव ! दुःकीर्तिः केवलं भवत एव । यतः परितो लोकाः पठन्ति ।

सा लज्जा साहसाङ्कस्य चौरराजस्य यद्यशः ।
[3]यत्तयोः स्फुटतां यातः सखिभावः परस्परम् ।।
हीनसंबधनासक्तो हीयते हि महानपि ।
मृगमङ्के समारोप्य लेभे चन्द्रः कलङ्किताम् ।।

राजोवाच । तत्किमुचितमिदानीम् ? चर उवाच । देव ! महतामपयश एव निवारणीयं भवति । तदियत्क्षणपर्य्यन्तं सुखापनेयमस्ति । जनाननेषु लब्धपदा दुःकीर्त्तिर्दुरपनेया भविष्यति ।

ततो विक्रमादित्येन प्रच्छन्नवेषधारिणा चौरस्य राज्यं गत्वा चरवचनं परीक्षितम् । पश्चाच्चौरो राजपदादवतार्य पूर्वमिव दशां प्रापितो हतश्च ।

श्लोकस्तु—

उल्लं-(प०३७) घ्याऽस्तु पुरी[4] पुरा विद्वज्जनो धत्तां गुणैर्गौरवम् ।
स्वैरं सम्प्रति सञ्चरन्तु वणिजो मार्गे विमुक्तापदि ।।

---

१. पु० प० (सु० झा)-स्वकृतानि च कर्माणि, पृ० २९

२. पु० प० (सु० झा)-दुःखस्थोहं, पृ० २९
पु० प० (पा०)-खिन्नोहं, पृ० ५६

३. पु० प० (पा०) यद्दत्तं दस्यवे राज्यं यच्च दस्युः कुकर्मकृत्; पृ० ५६;
पु० प० (सु० झा०) भूपरिक्रमणवत् पृ० २९

४. पु० प० (सु० झा०) उल्लाघाऽस्तु पुरीगणः, प० २९, ३०

[1]निद्रां तु प्रतिमन्दिरं पुरजनो जागर्तु धर्मोद्भवः[2]।
साधुद्वेषिणि साऽपराधचरिते चौरे हते भूभुजा[3] ॥

**इति विद्यापतिकविविरचिते भूपरिक्रमणग्रन्थे काशीतीर्थोभयकथाविवृत्तिः समाप्ता ।**

---

१. पु० प० (सु०) निद्रातु इति पाठः, पृ० ३०
पु० प० (भा०) भूपरिक्रमणवत्, पृ० ३०
२. पु० प० (सु० भा०) धर्मोत्सवः, पृ० ३०
३. हस्तलेखे : भूभुजामिति भ्रामकः पाठः, प० ३७

पञ्चमम्

# सिद्धदेशविवरणम्

अथान्तरे प्रभाते च काशीं त्यक्त्वा मुषली हली ।
स्वर्गभूमिञ्च गतवान् जैनदेवस्य सन्निधौ[1] ॥

सारनाथश्च तत्रैव वर्त्तते चातिशोभनः ।
अजगरसर्पस्य वृत्तान्तं[2] कलेः शापञ्च गमिष्यति ॥

स्वर्गभूमिं परित्यज्य संतीर्य्य गोमतीं नदीम्[3] ।
त्रिदलकाननं संस्पृश्य गाधिदेशं विहाय च ॥

वामनाश्रमं च्यवनाश्रमं गतवान् क्रमशो हली ।
च्यवनमुनिं[4] प्रणम्याथ निर्जरौषधिमापिवत् ॥

कारुषं दक्षिणे कृत्वा कर्म्मनाशां विहाय च ।
ताडकाविपिनान्ते च रामरेखां ददर्श हि ॥

सिद्धाश्रमं पञ्चक्रोशयोगिनां सिद्धिदायकम् ।
सप्तयोजनपरिमितो देशो हि कर्कशः सदा ॥

भोजभूपस्य वंशेन शासितो देशवृन्दकः ।
गौतमस्य प्रिया भार्य्या सार्द्धयोजनमध्यतः ॥

अहल्यावाटिका लोके विख्याता च नदीतटे ।
सोमलाली महाग्रामौ यत्र राजा ह्यासून् ज-(प० ३८) हौ ॥
विदुषामन्यतमः[5] नामा च भोजः सर्वगुणोत्तमः ।
हटपुरग्राममध्ये राजपुत्रो[6] हि भूपतिः ॥

---

१. हस्तलेखे नव्यार्यभाषाप्रभावरूपं निर्विभक्तिकं पदम् सन्निधि, प० सं० ३७
२. हस्तलेखपाठे लिङ्गव्यत्ययः । प० ३७
३-५. हस्तलेखे निर्विभक्तिकानि पदानि ।
६. हस्तलेखे रजपुत्रो इति भ्रामकः पाठः, प० ३८

विक्रमादित्यसन्तानवसतिस्तत्र भूयसी ।
अनेके[1] राजपुत्रा हि वसन्ति देशमध्यतः ॥

भूम्यां हि शासनं राजन् तत्र कलौ चकार ह ।
त्रिशतग्राममुख्याश्च सिद्धदेशेषु विश्रुताः ॥

रामभक्ता हि तत्रैव जागरन्ति युगेषु च ।
विश्वामित्रस्थले शीघ्रं गत्वा हि मुनिना सह ॥

पञ्चदिनं कामपालो नानाज्ञानमगान्नृप ।
ताटकावधवृत्तान्तं[2] हलिने स न्यवेदयत् ॥

श्रुत्वा हि सर्ववृत्तान्तं विश्वामित्रं च पृष्टवान् ।
गङ्गाया उत्तरे पारे दर्दुरक्षेत्रं जगाम ह ॥

वलिग्रामश्च तत्रैव सरयूसङ्गमान्तिके ।
त्रिकोणक्षेत्रं केचिच्च गायन्ति दर्दुरे नृप ॥
अष्टयोजनपरिमितो द्विशतग्रामसंयुतः ॥

भार्गवमुनेश्च सुस्थानं सर्वलोकविमुक्तिदम् ।
लोहडिग्रामो यत्रैव विश्रुतो वालियान्तरे ॥

ताजपुराख्यमहाग्रामो बलदेवो मुनिना सह ।
प्रदक्षिणं क्षेत्रमपि चकार मुनिना सह ॥

त्रिविक्रममूर्त्तिश्च यत्रैव गृहीतो[3] येन विष्णुना ।
श्रावणशुक्लपक्षीयपञ्चदश्यां हि वामनः ॥

वलिराजनिकटे याच्ञां[4] च कृतवान् पुरा ।
त्रिविक्रमस्थले हि मुनयः सन्ति तटिनीतटे ॥

---

१. हस्तलेखे अनेकै इति अशुद्धः पाठः, पृ० ३८
२. हस्तलेखे निर्विभक्तिकं पदम्, पृ० ३८
३. लिङ्गव्यत्ययो विशेष्यपदे, हस्तलेखे पृ० ३८
४. हस्तलेखे निर्विभक्तिकं पदम्, पृ० ३८

त्रिपादभूमिश्च यत्रैव हृतवान् वा-(प० ३९)मनेश्वरः ।
चालिग्रामसमः कश्चित् [1]पुण्यभूमिर्न विद्यते ।।

सरयुगङ्गयोः सङ्गे दानकग्रामः पुरा स्थितः ।
सङ्गमवेगतो येन ताडितो देवसिंहराट् ।।

यत्र शुक्राचार्यमुनिः काणत्वं प्राप्तवान् कुशैः ।
दिवसत्रयं च तत्रैव ह्युषितः मुनिना सह ।।

वज्रसारमहीपालं चोद्धृतवान् सङ्गमान्तिके ।
चम्पारण्यदेशीयनृपं दिव्यज्ञानं जगाम ह ।।

पद्यछन्देन[2] त्रिकालज्ञो भीरूणां कथितवान् कथाम् ।
तत्र रीत्या हि लोकस्य काव्यरीत्या च भूमिप ।।

लक्षीकृत्य पद्यवाक्यं तेने विद्यापतिः कविः ।
यवनादिनाम संगृह्य नानाभूपकथान्वितम्[3] ।

---

१. लिङ्गव्यत्ययः ।

२. नव्यार्यभाषाप्रभावरूपं पदम् ।

३. हस्तलेखे नानाभूपकथान्वितामिति भ्रामकः पाठः, प० ३९

# अथ भीरुकथा

पुमान् शौर्य्यविहीनस्तु कातरः कथ्यते बुधैः ।
स प्राणकातरो भीरुः कृपणो धनकातरः ॥

अपदेऽप्यापदाशङ्का स्तोकबुद्धिर्निजे बले ।
अभीमे भीमसंवित्तिर्भीरोः सर्वत्र जायते ॥

बभूव गङ्गादक्षिणकूले पारिभद्रो नाम राजा । स च प्रकृत्या भीरुः पितृरुपार्जिते राज्ये मन्त्रिभिः क्रियमाणः प्रभुरभूत् । पश्चात्तस्य भीरुतां दृष्ट्वा सन्निकृष्टराजानस्तद्भूमिसीमानमाचक्रमुः । यथा यथा शत्रवस्तस्य सीमानमाक्रान्तवन्तस्तथा तथा स भूमिं परितत्याज ।

तथा हि—

यः शान्तप्रकृती राजा [1]शौर्यं शक्तिमदर्शयिन् ।
विना यु-(पृ० ४०)द्धेन संवर्त्ते सोऽरिभिः परिभूयते ॥

यतः—

शत्रवः पिशुना रोगाः स्वभावादपकारिणः ।
अप्रतिक्रियमाणास्तु प्रभवन्ति पदे पदे ॥

क्रमेण शत्रूणामाक्रमं तस्य राज्ञो भीरुतां (च) दृष्ट्वा मन्त्रिण ऊचुः । देव ! भवतः सहिष्णुतया भूमिर्क्रान्तैव शत्रुभिः, परिशिष्टरक्षार्थमपि शक्तिर्दर्शयितव्या भवति । राजोवाच । का शक्तिर्दर्शयितव्या ? मन्त्रिण ऊचुः । युद्धेन प्रभुशक्तिः । राजोवाच । ऐषमः [2]सन्धिरेव क्रियताम् । परुत् कर्त्तव्यमेव युद्धम् । मन्त्रिण ऊचुः । यत्तदा कर्त्तव्यं तदिदानीमेव कथं न क्रियते ? अवश्यकर्त्तव्ये कर्मण्यलं कालातिपातेन । राजोवाच । युद्धे सति करितुरगपदातयः सन्देहे पातयितव्याः[3] । मन्त्रिण ऊचुः । यदि युद्धं न कर्त्तव्यं तदा सेनायाः किं प्रयोजनम् ? युद्धप्रयोजिकैव सेना । युद्धे पतिष्यति पतिष्यति । राजोवाच । युद्धे न केवलं सैन्यं पतति, स्वपातशङ्काऽपि विद्यते । यद्युभयबलसङ्ग्रामे प्रवर्त्तमाने प्रथमः शरो मम हृदि लगति तदा भवद्भिः स्वामिवत्सलैः किं क्रियते ? अतएवोक्तं नीतिशास्त्रे—

---

१. हस्तलेखे सौर्य्यं इति पाठः, पृ० ३९

२. हस्तलेखे एषतः, पृ० ४०

३. तत्रैव, पातयित्वा, पृ० ४०

अपि सर्वस्वमुत्सृज्य[1] समयं लङ्घयेद् बुधः।
समयो लङ्घितो येन तेन किन्नैव लङ्घितम् ॥

मन्त्रिण ऊचुः—

अशक्तौ च विपत्तौ च पथ्यं समयलङ्घनम्।
सामर्थ्ये सति कृत्येषु क्षणं न क्षमते बुधः ॥

इदानीं भवान् समर्थः शत्रून् यदि न पराभवि-(प०४१)ष्यति तदा लब्धप्रसराः शत्रव एव भवन्तं पराभविष्यन्ति। राजोवाच। तर्हि युद्धपरिपन्थी मम प्रतिनिधिः कश्चित् क्रियताम्। मन्त्रिण ऊचुः—

राजन्! हीनबलं हन्तुं कञ्चित् प्रतिनिधिं कुरु।
समानबलसङ्ग्रामे स्वयमेवोद्धुरो भव ॥

यतः—

सौभाग्यं परसौन्दर्याद् राज्यं परपराक्रमात्।
परबुद्धेश्च विज्ञानं न कश्चिदनुमन्यते ॥

राजोवाच। मन्त्रिणः! किमपि ब्रूत। युद्धाय नोत्सहते मदीयं मनः। यदि मां घातयितुमिच्छन्ति भवन्तस्तदा प्रेरयन्तु युद्धे। तस्य राज्ञस्तद्वचनमाकर्ण्य मन्त्रिणः सर्वे तस्मादुत्थाय बहिर्बभूवुः। परस्परमुदीरयामासुश्च—यदयं कुमारः पितरि जीवति विचक्षणः कृतिक्षमश्चोपलक्षितः। पितर्युपरते भीरुर्दृश्यते। कथमस्य राष्ट्रं स्थास्यति ?

यतः—

यावदासीत् परायत्तो तावद्दृष्टोऽयमुद्भटः[2]।
प्रायः स्वातन्त्र्यमासाद्य स्वभावं भजते नरः[3] ॥
यावदासीत् पितुः क्रोडे तावद्दृष्टः कृतिक्षमः।
भारे च पतिते मूर्ध्नि स्फुटीभूताऽस्य भीरुता ॥

---

१. पु० प० (पा०) पाठसंकोचप्राप्तिः, द्रष्ट० पृ० ४४।
पु० प० (भा० सु०) अपि देशं समुत्सृज्य इति पाठः, पृ० ३१
२-३. हस्तलेखे निर्विभक्तिके पदे, पृ० ४०

भीरुता च महद्दूषणं पुरुषस्य । यतः—

भीरुं नोपशेते जनो न कमला भीरोः करे वर्द्धते
भीरुं हन्त[1] पराभवन्ति पिशुना भीरुं हसन्ति स्त्रियः ।
तर्काभासशताकुलस्य परितः शङ्काम्बुधौ मज्जतो
भीरोः पुंस्त्वमपह्नुतं च विधिना स्त्रीत्वं च नोन्मीलितम् ।।

यतः—

गिरिकम्बुरली-(प० ४२)नोऽपि[2] सेनाकोटिवृत्तोऽपि च ।
तीर्णसप्तसमुद्रोऽपि भीरुर्भीति न मुञ्चति ।।

तस्य भीरुतया क्रमक्रमेण राज्यमिदं क्षीणमेव भविता । अस्माभिः किं कर्त्तव्यं तच्चिन्तनीयं भवति । यतः—

स्वेन दोषेण दुष्टात्मा स्वयं नश्यति केवलम् ।
भूपालस्य तु दोषेण नश्यन्ति सकलाः प्रजाः ।।

अस्माभिः सपरिवारैः[3] सधनैरत्र स्थीयते । यद्ययमिदानीं परित्यज्यते स्वामी तदा लज्जा पापं च । यदि न त्यज्यते तदा विनाशः । तत् किमत्र विधेयं भवतीति महान् सन्देहः ।

सन्देहनिर्णयफलिकैव बुद्धिरस्ति । ततः करोत्वयं राजा सन्धानम्, गच्छतु समयः । यतः—

भेतव्यं नापदस्तस्याः क्षणो यामन्तरा भवेत् ।
को जानाति क्षणादूर्ध्वं विधाता किं विधास्यति ॥

इति परामृष्य मन्त्रिणः सर्वे स्वं स्वं गृहं जग्मुः । स तु पारिभद्रो राजा स्वकीयभीरुतया क्रमेण शत्रुभिराक्रम्य गृह्यमाणः शत्रुसैन्यस्य भेरीरवं श्रुत्वा मन्त्रिणः पप्रच्छ । अहो ! भिषजां मते[4] भेरीशब्दो भेदको भवति । मन्त्रिण ऊचुः । कुमार ! भेरीशब्दो न भेदको भवतो भीरुता भेदिका[5] । पश्चादरीणां भेरीरवं श्रुत्वा दूरादेव पलायितः ।

१. हस्तलेखे 'हन्ति' इति भ्रामकः पाठः, प० ४१
२. पु० प० (भ्रा० सु०) 'गिरिकन्दरलीनोऽपि', पृ० ३३
३. हस्तलेखे सपरीवारैः इति पाठाशुद्धिः, प० ४२
४. हस्तलेखे 'तरे' इति भ्रामकः पाठ, प० ४२
५. तत्रैव भेदका इति पाठाशुद्धिः, प० ४२

महत्त्वं गूढमेवास्ति दूरे तिष्ठतु पौरुषम् ।
यत्पितुः सञ्चितं राज्यं भीरुणा तच्च हारितम् ॥

अपि च—

भीरुं नाश्रयते जनो न कमला भीरोः (पृ० ४३) करे वर्द्धते
भीरुं हन्त । पराभवन्ति पिशुना भीरुं हसन्ति स्त्रियः ।
तर्काभासशताकुलस्य परितः शङ्काम्बुधौ मज्जतो
भीरोः पुंस्त्वमपह्नुतं च विधिना स्त्रीत्वञ्च नोन्मीलितम् ॥

**इति भूपरिक्रमणग्रन्थे बलदेवतीर्थयात्रायां सिद्धदेशविवरणे भीरुकथा समाप्ता ।**

षष्ठम्

# नृसिंहदेशविवरणम्

अथान्तरे कामपालः[1] पञ्चयोजनव्यत्यये ।
नृसिंहतीर्थञ्च प्राप्तवान् द्वे पत्तने विहाय च ॥

पत्तनं भोजराजस्य तथा पालितपत्तनम् ।
मणिहारिसन्निधाने नृसिंहतीर्थं जगाम ह ॥

त्रिकालज्ञो मुनिवरः[2] प्रोवाच हलिनं प्रति ।
पाद्मकल्पे नृसिंहदेवः[3] प्रकटं प्राप्तवान् पुरा ॥

शोणगङ्गासङ्गमे च माघे मासि यो नरः ।
उषसि स्नानं कृतवान् पापं देहाद् विमुच्यते ॥

नृसिंहनखारभूमिश्च त्रयोदशयोजनान्विता ।
कारुषपाटलिपुरयोर्मध्यवर्त्तिनी या भूमिः ॥

सैष भूमिर्महीपाल अस्त्युग्रा चातिनिर्दया ।
प्रायो हि फेणसंभवा च शुद्धसस्यविवर्जिता ॥

द्विशतग्राममुख्या हि नृसिंहभूमिर्विश्रुता ।
विश्वंभरपुरं रम्यं तथा चाराणपत्तनम् ॥

जगदीशपुरं तत्र कुडमिजातिसुखास्पदम् ।
भालुकाघट्टो हि तत्रैव सदा दस्युभयं महत् ॥

प्रायशो दुष्टमानुषाणां वसतिस्त्रिषु युगेषु च ।
पञ्चरात्रं कामपालो वसतिं कृतवान् तदा ॥

(प० ४४) कृपणस्य कथां काञ्चित् त्रिकालज्ञो बलं प्रति ।
प्रोवाच त्वरया तत्र व्यासमुनिविभाषिताम् ॥

---

१-३. हस्तलेखे सम्ध्यशुद्धयः प्राप्यन्ते । कामपालो, मुनिवरो, देवो इति, प० ४३

तामेव साम्प्रतं भूप निमिदेशनिवासकृत ।
श्रूयतां गद्य-पद्येन नानाकौतुकसंयुतम्[1] ।
कियत् काव्यं कलेर्वृत्तं सहितं प्रोच्यते मया ।।

कृपणस्य कथां श्रुत्वा बलदेवो मुनेर्मुखात् ।
प्रहर्षणं च प्राप्तवान् शोणसङ्गमकच्छगः ।।

**इति भूपरिक्रमणग्रन्थे नृसिंहदेशविवरणं समाप्तम् ।**

१. हस्तलेखे संयुतामिति भ्रामकः पाठः, प० ४४

सप्तमम्

## जनकदेशविवरणम्

अथान्तरे बलदेवो हि नरहरिनामदेशकम् ।
परित्यज्यैव गतवान् देशं पाटलिसंज्ञकम् ॥

तत्र देवीं पूजयित्वा दृष्ट्वा नगरशोभनम् ।
गङ्गामुत्तीर्य्य गतवान् गङ्गागण्डकीसङ्गमम् ॥

तत्र स्नात्वा तर्पयित्वा तीरभुक्तिं विहाय च ।
जनकदेशं (गतवान्) सहितो मुनिना नृप ॥

अष्टरात्रं[1] तत्रोवास नानातीर्थं चकार ह ।
द्वाविंशतियोजनमितः सहस्रग्रामसंयुतः ॥

प्रायो ह्युदारा हि नरा नीचयोनिषु संभवाः ।
जनकपुरदक्षिणांशे सप्तयोजनव्यतिक्रमे ॥

डिजगलमहाग्रामे गेहास्तु जनकस्य च ।
यमुना[2] सरितां (श्रेष्ठा) सदा वहति वेगगा ॥

डिजगलदक्षिणे भागे योजनार्द्धव्यतिक्रमे ।
गिरिजासंज्ञको ग्रामो विश्रुतो देशवासिभिः ॥

प्राचीनमन्दिरं तत्र पुष्करिणीद्वयान्तरे ।
भैरवस्थानं च गतवान् बलदेवो मुनिना सह ॥

पूजयित्वा भै-(प० ४५) रवं गतवान् सीतामण्डपम् ।[3]
विवाहो हि पुरा जातो यत्र सीतायाः ग्रन्थिबन्धनम् ॥

---

१. हस्तलेखे अष्टौ रात्रि इति, प० ४४

२. तत्रैव पमुना, प० ४४

३. तत्रैव सीतामण्डपभूमिकेति पाठः, प० ४४

सीताकुण्डदक्षिणांशे क्रोशत्रयव्यतिक्रमे ।
चण्डीस्थानञ्च तत्रैव जागर्ति (यत्र) देविका ॥

सीताकुण्डदक्षिणांशे सुरशाख्ये तु भूपते ।
सुरस्थानेदक्षभागे सप्तक्रोशव्यतिक्रमे ॥

धनुषग्रामो महीपाल विपिनान्तरमेव हि ।
परशुरामकुण्डं महाग्राम आहीराणां निवासभूः ॥

गोरसं बहुलं तत्र ग्रामीणाः संवसन्ति हि ।
गिरिजादक्षिणे भागे पञ्चक्रोशव्यतिक्रमे ॥

आहारी ग्रामो महाग्रामो गोतमकुण्डस्य सन्निधौ ।
अहल्यावटश्च पूजितः ह्रस्वा नदीषु विश्रुता ॥

कमलानदी नातिदूरे चाहारीपत्तनस्य (च) ।

जनकपुरो दक्षिणे च पञ्चक्रोशव्यतिक्रमे ।
विशोरो हि (महाग्रामः तत्रैव) बहिः स्थितः ।।

पञ्चक्रोशव्यत्यये च अरगाजापुकुण्डं चैव ।
(तत्रैव हि विख्यातं) दशरथकुण्डमेव च ।।

दशरथकुण्डे च गङ्गासाहगरकुण्डे ।
जलेश्वरो महादेवः प्राचीनमन्त्रतः सदा ।
जलेशयश्च परित्यज्य (प्रविष्टो) जलान्तरे ।।

(सम्पूज्य बलदेवो हि) मन्दिरदेवं निमीलितम् ।
चकार सतीर्थवृद्धमुनिना सहितो मुदा ।।

रात्रिकाले गौतमकुण्डे त्रिकालज्ञो मुनिर्महान् ।
अलसरकथां च हलिने श्रावयामास वै पुरा ॥
नि-(पृ० ४६)क्षिप्य चान्यवार्त्तायां श्रमनिवारणहेतवे ।

# अथ कृपणकथा

न ददाति न चाश्नाति धनं रक्षति जीववत् ।
प्रातरस्मरणीयत्वात् कृपणः कस्य नाऽप्रियः ॥

तद् यथा—

आसीन्मथुरायां गूढधनो नाम वैश्यः । स च कलावाणिज्यादिभिर्बहुलीकृतवित्तः परमकृपणो बभूव । एकदा दुर्भिक्षे प्रत्यासन्ने चिन्तितवान्—यदस्मिन् दुर्भिक्षे मम वित्तानि पुत्रकलत्रादिभिः खादितव्यानि । मया च धनशोकेन मर्त्तव्यम् । तन्न भद्रम् । यतः—

एकाकी पुरुषः श्रीमान् धनं तस्य परं सुहृत् ।
अन्ये वा सुहृदः सर्वे धनमूलं कुटुम्बकम् ॥

तदानागतावेक्षां करोमि । पराऽलक्ष्ये स्थाने वित्तानि धारयामीति परामृष्य तथा कृतवान् । ततो दुर्भिक्षे चापतिते परिवारान्[1] सर्वानन्नेन विना म्रियमाणान् पश्यन्नपि कस्मैचित् किमपि न ददौ । किन्च [2]परिवारैर्कण्ठगतप्राणैर्याच्यमानः पद्यमिदं पपाठ—

कृपणस्य धनं प्राणास्तत्र प्रार्थयता मम ।
प्राणाः किं नैव गृह्यन्ते धनशोकविवर्जिताः ॥

अतस्तस्य पुत्रकलत्रादयः सर्वे विनान्नेनैव मृताः । स्वयं च प्राणमात्रावशेषः परामृष्टवान्—

यन्न पुत्रकलत्रेभ्यो दत्तं वित्तं मयार्जितम् ।
तन्निजप्राणरक्षार्थं कथं भोक्ष्ये निराकुलः ॥

ततः स्वप्राणरक्षा-(प० ४७) यामपि वित्तं न विनियुङ्क्ते । उपवासेन दिनानि गमयन्तं तमतिदुर्बलं दृष्ट्वा तन्नगरवासिनः कारुणिकाः पुरुषाः केऽपि प्रोचुः । हे कृपण ! किं करिष्यसि तेन धनेन यस्मिन् विद्यमानेऽपि निजप्राणान् यास्यतोऽनुमन्यसे ? अपि च उचितमेवैतत् । यतः—

---

१-२ हस्तलेखे 'परीवार' इति पाठाशुद्धिः, प० ४६

अर्जने लभते खेदं क्षतौ शोकं च विन्दति ।
नाप्नोति कृपणो वित्ते दानोपभोगजं सुखम् ।।

अपि च—

दीयते न यदुत्साहात् भुज्यते यन्न कामतः ।
तद्धनं च्युतिदुःखार्थं खेदार्थं वा विचिन्वतः[1] ।

गूढधन उवाच । अये नगरवासिनः पुरुषाः ! किमपि कुरुत । मया प्राणव्ययेनापि धनव्ययो न स्वीक्रियते । त ऊचुः—तर्हि राज्ञा चौरेण वा ग्रहीतव्यम् त्वयि विपन्ने तव धनम् !

गूढधन उवाच । तदन्यस्यैव बुद्धिहीनस्य धनमन्ये गृह्णन्ति । मया स्वकीयधनं गले बद्ध्वा मर्त्तव्यमित्यभिधाय धनपोटलकं गृहीत्वा गङ्गातीरे[2] मर्त्तुं जगाम । तत्र च नाविकं धीवरमुपसर्प्याह । भ्रातर्नाविक ! अमी दुस्त्यजा मम प्राणास्त्यक्तुकामेनापि मया त्यक्तुं न शक्यन्ते । ततस्त्वं परिवारशोकाकुलं[3] मां गङ्गायां मज्जयित्वा मारय । तदुपाधिना[4] तुभ्यमेकं सुवर्णखण्डं दास्यामि । नाविक उवाच—तर्हि देहि सुवर्णखण्डम् । गूढधनः ततः सुवर्णानि प्रकाश्य[5] दर्शयामास, दृष्ट्वा च पुनरब्रवीत् । भ्रातर्नाविक । सर्वाणि सुवर्णानि दाहविशुद्धानि (प० सं०४८) परस्मै दातुमयोग्यानि । ततः पुण्यार्थमेव मारय माम् । नाविकस्तु तानि सुवर्णानि दृष्ट्वा प्रवृद्धलोभस्तमुवाच । मा दास्यसि मे सुवर्णखण्डम् । पुण्यार्थमेव त्वां हनिष्यामीत्यवादीत् । ततस्तं जले मज्जयित्वा गतप्राणं कृत्वा सुवर्णानि गृहीत्वा स नाविकः कृतार्थो बभूव ।

श्लोकस्तु—

जनयति हृदि खेदं मङ्गलं न प्रसूते
परिहरति यशांसि ग्लानिमाविष्करोति ।
उपकृतिरहितानां सर्वभोगच्युतानां
कृपणकरगतानां सम्पदां दुर्विपाकः ।।

**इति कृपणकथा समाप्ता ।**



---

१. हस्तलेखे विचिन्वितः पाठाशुद्धिः, प० ४७

२. पु० प० (पा०)–समुद्रतीरे, पृ० ३७ ;
(भ्रा० सु०)–गङ्गातीरे, पृ० ३६

३. हस्तलेखे परीवारकाशो कुलमिति भ्रामकः पाठः, प० ४७

४. पु० प० (पा०) तदवेतनत्वेन, पृ० ३७
(भ्रा० सु०)–तदुपोधिना, पृ० ३६

५. हस्तलेखे प्रकाशयित्वा इति पौराणिकः प्रयोगः, प० ४७

# अथालसकथा

तद् यथा—

उद्योगहेतुरुत्साहः प्राणिधर्मो निगद्यते ।
क्रियासु सर्वरूपासु विना तेनालसो भवेत् ॥

आसीन्मिथिलाया वीरेश्वरो नाम मन्त्री । स च स्वभावाद् दानशीलः कारुणिकश्च सर्वेभ्यो दुर्गतेभ्योऽनाथेभ्यश्च प्रत्यहमिच्छाभोजनं दापयति । तन्मध्येऽलसेभ्योऽप्यन्नवस्त्रे दापयति । यत.—

दुर्गतीनां च सर्वेषामलसो प्रथमो मतः ।
किञ्चिन्न क्षमते कर्त्तुं जाठरेणापि वह्निना ।

अथवा परमसुखस्थानमालस्यम् । यतः—

कुत्राऽपि तिष्ठति मनः क्वचिदङ्गकानि
नात्मा[1] चिकीर्षितरसैः श्रममभ्युपैति ।
आलस्यमात्रवशगस्य नरस्य मन्ये
निद्रासुखं हरति जाठर एव वह्निः ॥

ततोऽलसपुरुषाणां तत्रेष्टलाभं श्रुत्वा बहवस्तुन्दपरिमृजास्तत्र वर्तुलीबभूवुः । यतः—

स्थिति सौकर्यमू-(प० ४६)ला हि सर्वेषामपि संहतेः[2] ।
सजातीनां[3] सुखं दृष्ट्वा के न धावन्ति जन्तवः ॥

पश्चादलसानां सुखं दृष्ट्वा धूर्ता अपि कृत्रिमालस्यं दर्शयित्वा भोज्यं गृह्णन्ति । तदनन्तरमलसशालायां बहुद्रव्यव्ययं दृष्ट्वा तन्नियोगिपुरुषैः परामृष्टम् । यदक्षमबुद्ध्या करुणया केवलमलसेभ्यः स्वामी वस्तूनि दापयति, कपटेन निरलसा अपि

---

१. हस्तलेखे नात्म इति पाठाशुद्धिः, प० ४८
२. पु० प० (पा०) सर्वेषामपि जायते, पृ० ३६
(झा० सु०) भूपरिक्रमणपाठः, पृ० ३८
३. पु० प० (पा०) सजातानाम्, पृ० ३६; (झा० सु०) भूपरिक्रमणवत्, पृ० ३८

गृह्णन्त्यस्माकं प्रमादः । तदस्मद्दोषेण स्वामिधनं वृथा विनष्टं भवतीति वयं प्रत्यवायिनः । यदि भवति, तदालसपुरुषाणां परीक्षां कुर्म इति परामृष्य स्वयमेष्वपि निद्राणेष्वलसशालायां ते नियोगिपुरुषा वह्निं दापयित्वा निरूपयामासुः ।

ततो गृहलग्नं प्रवृद्धमग्निं दृष्ट्वा धूर्त्ताः सर्वे पलायिताः । पश्चादीषदलसा[1] अपि पलायिताः । चत्वारः पुरुषास्तत्रैव सुप्ताः परस्परमालपयन्ति । एकेन वस्त्रावृत्तमुखेनोक्तम् । अहो ! कथमयं कोलाहलः ? द्वितीयेनोक्तम् । दृश्यते यदस्मिन् गृहेऽग्निर्लग्नोऽस्ति । तृतीयेनोक्तम् । कोऽपि तथा धार्मिको नास्ति य इदानीं जलार्द्रैर्वासोभिः कटैर्वाऽस्मानावृणोति ? चतुर्थेनोक्तम् । अये वाचालाः ! कति वचनानि वक्तुं शक्नुथ ? तूष्णीं (कथं) न तिष्ठथ ?

ततश्चतुर्णामपि तेषामेव परस्परालापं श्रुत्वा वह्निं च प्रवृद्धमेषामुपरि पतिष्यन्तं दृष्ट्वा नियोगिपुरुषैर्वधभयेन चत्वारोऽप्यलसाः केशे-(पृ० सं० ५०) ष्वाकृष्य गृहीत्वा गृहाद् बहिः कृताः । पश्चात्तानालोक्य नियोगिभिः पठितम्—

पतिरेव गतिः स्त्रीणां बालानां जननी गतिः ।
नालसानां गतिः काचिल्लोके कारुणिकं विना ।।

पश्चात्तेषु चतुर्ष्वलसेषु ततोऽप्यधिकतरं वस्तु मन्त्री दापयामास ।

**इत्यलसकथा समाप्ता**

अन्वयव्यतिरेकाभ्यामुक्तं वीरस्य लक्षणम् ।
अप्युदाहृतयः प्रोक्ताः कथा द्वारा द्वयोरपि ।।

**इति विद्यापतिकृते भूपरिक्रमणग्रन्थे जनकदेशविवृत्यामलसकथा समाप्ता ।**



मुनिवेरामवाणशशिवत्सरे संख्यके गते
एतासां परीक्षणवृत्तिं चक्रे भूपस्य चाज्ञया ।

[ राम राम । रा म ॥ रा ॥ म ॥ रा म ॥ ][2]

१. हस्तलेखे ईशदलसा इति, शषयोरभेदत्वं नव्यार्यभाषायाः प्रभावरूपकम् ।
२. हस्तलेखस्य निर्विघ्नपरिसमाप्तिसूचकं नामस्मरणमिति ।

अनुबन्धनम्

# स्थान–सूची

# सङ्केताः

| | |
|---|---|
| प० | (हस्तलेखस्य) पत्रम् |
| प० स० | पत्रसंख्या |
| पु० प० | पुरुष-परीक्षा |
| पु० प० (झा) | पुरुष-परीक्षा (पं० रमानाथ झा सम्पादिता, शकाब्दे १८८१, पटना) |
| पु० प० (पा०) | पुरुष-परीक्षा (पं० चन्द्रकान्त पाठकेन सम्पादिता), शकाब्दे १८४६, मुम्बई। |
| पु० प० (सु०) | पुरुषपरीक्षा (पं० श्री सुरेन्द्र झा 'सुमन' शर्मणा सम्पादिता, ख्रो० १९७० ई०, दरभङ्गा) |
| हस्तलेखः | भूपरिक्रमणस्य हस्तलेखः |
| ह० ले० | हस्तलेखः |
| पृ० | पृष्ठम् |
| पृ० सं० | पृष्ठसंख्या |